**'स्वाध्याय' शब्दो वेदे हि रूढो योगेऽपि वर्तते ।।६ ।।**

**'सुष्ठ्वा' समन्तादध्येयः शोभनं नियमैर्युतः ।**

**देशे काले गुरौ स्वस्मिन् अपेक्ष्यन्ते गुणा इह ।।७ ।।**

**'आ' सर्वतः पुनस्तत्र यथा शङ्का न जायते ।**

**शब्दे ह्यर्थे ह्यनुष्ठाने तथाध्येयो हि वैदिकैः ।।८ ।।**

**अपर्णताद्यपहतपाप्मादिसकलैः गुणैः ।**

**प्रजापतिमुखैः वेदो यथा हि पठितः पुरा ।।९ ।।**

**तादृग्गुणविशिष्टोऽत्र वेदः 'स्वाध्याय' उच्यते ।**

**'तव्य' स्त्वावश्यके प्रोक्तो न विधिः ज्ञातृबोधनात् ।।१० ।।**

**'स्वाध्याय' पदतो ज्ञेयं तन्माहात्म्यं फलं तथा ।**

**स्वाध्याय...**इत्यादि. तथाच ''सुष्ठु आसमन्ताद् यथा स्यात् तथा यो अधीयते सः स्वाध्यायः'' इति अयं योगः इति अर्थः. **सु** इत्यस्य अर्थः **शोभनम्** इत्यादि, तच्च अध्ययने अपेक्षित-देशकालगुरुशिष्यगत-गुणविशिष्टत्वम्. **आङो** अर्थस्तु **पुनस्तत्र** इत्यादिना उच्यते. **हिः** सर्वत्र निश्चयार्थः. तथाच शब्दार्थानुष्ठानेषु शङ्काराहित्यम् 'आङ्'-अर्थः. तेन 'स्वाङ्'द्योतितार्थपूर्वकं यो अधीयते वेदः स स्वाध्यायः इति अर्थः. एवम् अध्ययनेन यो अतिशयो अध्येतरि यश्च वेदे आधीयते तम् आहुः **अपर्णता** इत्यादि. ''जायमानो वै ब्राह्मणः त्रिभिः ऋणवा जायते-ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजाभिः पितृभ्यः, एष वा अनृणो'' (तै.सं.६ ।३ ।१०) इति श्रुत्या ''ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो, यज्ञाध्ययनदानैस्तानतिस्तीर्य त्यजन् पतेत्'' (       ) इत्यादिस्मृतिभिः च ब्रह्मचर्यपूर्वकाध्ययनेन अपर्णता. **आदि**-पदोक्तो वेदोक्त-साधनकरण-तत्फलाप्त्योः स्वरूपयोग्यतारूपो अधिकारश्च अध्येतुः भवति. ''अपहतपाप्मा स्वाध्यायो देवपवित्रम्'' (तै.आ.२ ।१५) इति श्रुत्युक्तम् 'अपहतपाप्मत्वम्' आदि-पदोक्तम् अयातयामत्वं तत्पठिते वेदे भवतीति, उभाभ्याम् अध्येतृधर्म-वेदधर्माभ्यां साक्षात् परम्परया च वेदस्य संस्कारेण स्वाध्यायत्वं तस्य भवति. अन्यथातु ''छन्दांस्येनं प्रजहन्ति काले नीडं शकुन्ता इव जातपक्षाः'' (म. भा.५ ।३५ ।३५) इति न्यायः स्याद् इति अर्थः. तेन सिद्धम् आहुः **प्रजापति...**इत्यादि. स्वाध्याये अधिकारिणं बोधयितुम् 'अध्येतव्यः' इति 'तव्य'स्य अर्थम् आहुः तव्यः इत्यादि.



स्वाध्यायब्राह्मणे ''यत् स्वाध्यायम् अधीयीत एकामपि ऋचं यजुः साम वा तद् ब्रह्मयज्ञः सन्तिष्ठते'' (तै.आ.२ ।१०) इति ब्रह्मयज्ञं लक्षयित्वा तत्फलं तस्य यज्ञत्वसम्पत्तिप्रकारं च उक्त्वा, अग्रिमानुवाके कानिचित् तस्य पूर्वा'नि विधाय तेषां फलं च उक्त्वा ''प्राङासीनः स्वाध्यायमधीयीत'' (तै.आ.२ ।११) इति विधाय, अग्रे चतुर्भिः अनुवाकै तत्प्रकारं वदन्, स्वाध्यायस्य अपहतपाप्मत्वं ''अपहतपाप्मा स्वाध्यायो देवपवित्रम्'' (तै.आ.२ ।१५) तदध्ययनं विना वाचि अभागं स्वर्गाभावं च प्रतिपाद्य, पश्चाद् आह ''तस्मात् स्वाध्यायोऽध्येतव्यो यं-यं क्रतुमधीते तेन-तेन अस्य इष्टं भवति'' (तै.आ.२ ।१५) इत्यादि. तेन ज्ञानपूर्वकस्य अध्ययनस्य अत्र उक्तत्वात् न विधिः.

यदि तद् वाक्यं भिन्नमेव उपेयते तदापि अनेन उपसंहारात् न विधित्वम्. नच-'तव्य'स्य आवश्यकत्वार्था'ीकारे ''अनधीयानाः व्रात्याः भवन्ति'' ( )इति-वाक्यवैयर्थ्यापत्तिः, 'तव्य'स्य भावकर्मविध्यनुवादप्राप्तकालावश्यकाद्यर्थेषु विधानदर्शनाद्, अत्र तदर्थनिश्चायकत्वेन अस्य अवैयर्थ्याद्, अतः पूर्वोक्तएव अर्थः इति अर्थः. नच-''स्वाध्याय...''-वाक्यासंनिहितस्य ''अनधीयान...''-वाक्यस्य कथं तदर्थनिर्णायकत्वम् इति-शङ्क्यं, बाधलक्षणे ''अपितु वाक्यशेषः स्याद् अन्याय्यत्वाद् विकल्पस्य विधीनाम् एकदेशः स्याद्'' (जै.सू.१० ।८ ।४) इत्यत्र जैमिनिनैव दूरस्थस्यापि ''यजतिषु 'ये-यजामहं' करोति''( ) '' नानुयाजेषु...'' (आप.श्रौ.सू.२४ ।१३ ।६) इत्यस्य ''एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त'' (तै.सं.१ ।६ ।११) इति वाक्यशेषतायाः तदर्थनिश्चायकत्वेन अङ्गीकाराद्; भट्टवार्तिकेऽपि ''येन यस्यार्थसम्बन्धो दूरस्थेनापि तेन सः अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्'' (   ) इति कथनात् च इति दिक्. एतदेव निगमयितुं 'स्वाध्याय'पद-यौगिकार्थज्ञानस्य आवश्यकत्वं च ज्ञापयितुम् आहुः स्वाध्याय...इत्यादि. तथाच यथा 'दर्शा'दिपदैः समुदायैक्यज्ञापनम् एवं 'स्वाध्याय'पदेन तन्माहात्म्यज्ञापनम्. तस्मिन् ज्ञाते फलं भवति न अन्यथेत्यतः योगादरः आवश्यकः इति अर्थः. यत् पुनः सायणीये ''स्वस्य असाधारणत्वेन पितृपितामहादिपरम्पराप्राप्ता शाखा स्वाध्यायः'' (तै.आ.सा.भा.२ ।१०) इति योगान्तरम् उक्तं, तत्रापि श्रुतिस्मृत्याद्युक्तानाम् अध्ययननियमानां वेदार्थादि-सन्देह-निरासस्य च आवश्यकत्वाद् उक्तो योगो निर्बाधइति स योग इदानीन्तनानां मन्दबुद्धिनां तावता सङ्कोचेनापि फलाप्तये फलति इति बोध्यम् ।।६-१० ।।

(ख)

एवं तादृशाध्ययनस्य माणवकाधिकारत्वं निवार्य अध्ययनविध्यभावे माणवकस्य अध्ययनार्था प्रवृत्तिः न स्याद् इति शङ्कां वारयितुं द्वितीयवाक्यस्थं विशेषं स्फुटीकुर्वन्ति द्वाभ्यां –

**ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं वाक्यमीर्यते ।।११।।**
**वसुरुद्रादित्यवर्षैः त्रयो वर्णाः क्रमाद् द्विजाः ।**
**अध्याप्या इति तस्यापि नियोगः श्रुतिचोदितः ।।१२।।**
**पराधीनतया बाले न विधिः श्रुतिचोदितः ।**

**ज्ञातृ**...इत्यादि, **ज्ञातुः** आचार्यस्य **ज्ञापनतासिद्ध्यै**, नन्द्यादित्वाद् 'ल्युः'(द्रष्टव्यं : पाणि.सू.३।१।१३४) वैदिकशब्दादि-ज्ञापकत्वसिद्ध्यर्थम् ''अष्टवर्ष...''-वाक्यम् ईर्यते. तच्च न ब्राह्मणमात्रपरं किन्तु अग्रे राजन्यवैश्ययोरपि उपनयनस्य तत्तद्वर्षे कथनात् तादृशस्मृतेः च त्रयोऽपि वर्णाः द्विजत्वाद् अध्याप्या- इति एतदर्थं **तस्य** आचार्यस्यापि **नियोगः** अध्यापनात्मके कार्ये प्रवर्तनरूपः, **श्रुतिचोदितः** ''सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः'' (पाणि.सू.१।३।३६) इत्यनेन आचार्यकरणे विहितस्य आत्मनेपदस्य श्रुत्या 'अध्यापयीत' इति 'लिङ्'श्रुत्या च चोदितः. अतः स्वस्य आचार्यत्वाय ज्ञात्रा ते अध्याप्याः. अतो माणवकाध्ययनम् अध्यापनविधिप्रयुक्तमिति न माणवकस्य अध्ययने प्रवृत्तिविघातः इति अर्थः. अत्र 'नियोग'पदोक्त्या प्राभाकरमतस्य अस्मिन् स्थले साधुत्वं बोधितम्. ननु किम् अनेन निर्बन्धेन, अध्ययनविधिनैव माणवकप्रवृत्तौ किं बाधकम्? अतः आहुः **पराधीन**...इत्यादि. यतः तत्र तथा अङ्गीकारे विधिव्यापारः कुण्ठो भवति इत्यतो न आद्रियते इति अर्थः. एवं द्वितीयवाक्यगतो विशेषो विशदीकृतः ।।११-१२।।

(ग)

**एवम्** अध्यापनविधिना माणवकस्य अध्ययनप्रवृत्तौ साधितायामपि गुरुमुखाद् अक्षरग्रहणमात्रम् आयास्यति, ''उपनीय दद्वेदमाचार्यः स उदाहृतः'' (या.स्मृ.२।३३) इति याज्ञवल्क्योक्तात् तल्लक्षणात्, नतु अध्ययनस्य अर्थज्ञानपर्यन्तत्वम्. तथासति अनर्थकः 'स्वाध्याय'पदयोगादरः इति आकाङ्क्षायां तृतीयवाक्यगतं विशेषं व्याकुर्वन्ति



प्रमाणोपन्यासपुरःसराभ्यां सार्धाभ्याम् –

**तथाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते ।।१३।।**
**साङ्गेऽधीते तथा ज्ञाते स्वाध्यायस्तस्य सिध्यति ।**
**अध्यापनप्रयुक्तं हि प्रथमं 'लिङ्'प्रयोगतः ।।१४।।**
**आत्मनेपदतः स्वस्य स्यातां वृत्तिश्च सेत्स्यति ।**
**(१)''उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।।''(म.स्मृ.२।१४०)**
**(२)''आचार्यवान् पुरुषो वेदः''(छा.उ.६।१४।२)**
**(३)''आचार्यं मां विजानीयात्''(भा.११।१७।२७)**
**(४)''गच्छेदाचार्यसंसदि''( )**
**स्वातन्त्र्ये वयसा जाते तस्यावश्यकमीर्यते ।।१५।।**

तथा इत्यादि, साङ्गस्य वेदस्य अर्थ**ज्ञापनपूर्वकाध्यापनसिद्ध्यर्थं तृतीयं वाक्यम् ईर्यते,** यतः स्वयं गुरुणा **साङ्गे अधीते ज्ञाते** वेदे **तथा** तेन प्रकारेण **स्वाध्यायः** सम्यक् प्रकारकम् आसमन्ताद् अध्ययनं तस्य शिष्यस्य सिध्यति, हि यतो हेतोः, **प्रथमम्** अध्ययनम् **अध्यापनप्रयुक्तं** विध्यर्थक **'लिङ्'प्रयोगतः** साधितं तस्मात्. नच अस्य वाक्यस्य कथम् अध्यापनार्थत्वम्? इति शङ्क्यम्, अध्यापनवाक्ये 'उपनयीत' इति आत्मनेपदतः **स्वस्य** अध्यापकस्य साङ्गाध्ययनज्ञाने **स्यातां**, ञितो धातोः कर्तृगामिन्येव क्रियाफले आत्मनेपदाऽनुशासनात्, तस्यच अत्र 'आचार्यकरण'रूपार्थत्वात्, तस्य च ''उपनीय तु यः'' (म.स्मृ.२।१४०) इति स्मृत्युक्तलक्षणकत्वात्.

(१)लक्षणवाक्येच अध्याप्यस्य ''सकल्पं सरहस्यं'' (म.स्मृ.२।१४०) इति विशेषणबलेन तादृशाध्ययनस्य पूर्वं प्राप्तेः अध्ययनार्थज्ञाने भवतः. वृत्तिः जीवननिर्वाहः, च ततएव, सेत्स्यति अतः [१]एतत् त्रयम् आत्मनेपदात् लभ्यते.

(२)किञ्च ''आचार्यवान्'' (छा.उ.६।१४।२) इति श्रुत्या आचार्यवतो ब्रह्मज्ञानम् उक्तं तदपि अध्यापनद्वारकमेव, गुरोः ज्ञाने तेन च ज्ञापनएव तद्दर्शनात्.

(३)किञ्च पुराणेऽपि ''द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः'' (भाग.११।१७।२२) इत्यादिना उपनीतम् उपक्रम्य, ''आचार्यं मां विजानीयाद्''

(भाग.११।१७।२७) इति तस्य आचार्ये भगवद्बुद्धिकरणं विधत्ते.

(४)स्मृत्यन्तरेच आचार्यसभायां गमनम्.

तद् उभयमपि तस्य अवश्यकृत्यम्, अन्यथा विद्यायाः असिद्धेः. तच्च **वयसा स्वातन्त्र्ये जातएव** भवति नतु आहत्य बाल्ये, क्रीडनासक्तत्वात्. तस्मात् श्रुतिचोदितो अध्ययनज्ञानयोः विधिः न माणवकाधिकारकः किन्तु अध्यापनविधिप्रयुक्तमेव तद् उभयं बालस्य. तदेवच **स्वातन्त्र्ये तस्य आवश्यकं**

---

१.''अतएव तद्देयम्'' इति ते.गो.पाठशोधनिका.

तदैव वेदस्य स्वाध्यायत्वसिद्धिरिति एवं तस्य विशेषस्य प्रयोजनत्वम् इति अर्थः.

एवञ्च याज्ञवल्क्यवाक्येऽपि[१] सरहस्यस्य साङ्गस्य वेदस्य [२]दानम् अङ्गीकर्तव्यमिति अविरोधः ॥१३-१५॥

(भाट्टमतविमर्शः)

एवं वाक्यत्रयगतं विशेषं व्याख्याय भाट्टमतम् अस्मिन् विषये आहुः-

**मर्यादाभङ्गतः केचित् कृत्ये विध्यर्थतां जगुः।**
**शब्दार्थमनपेक्ष्यैव निर्णयं च स्वबुद्धितः॥१६॥**
**अध्यापनप्रयुक्तं हि तस्मादध्यापनं मतम्।**
**एतर्ह्यपि तथैवैतत् न कार्या कल्पना ततः॥१७॥**

**मर्यादा**...इत्यादि. **केचिद्** भाट्टाः कृत्ये 'अध्येतव्यः' इत्यादौ प्रत्यये **विध्यर्थतां जगुः,** ''प्रैषातिसर्ग[३]प्राप्तकालेषु कृत्याश्च'' (पाणि. सू.३।३।१६३)इति सूत्रेण तेषां विधौ विधानाद् उक्तवन्तः, पूर्वोक्तरूपं **शब्दार्थम् अनपेक्ष्य** अविवक्षितत्वेन अभिसन्धाय **स्वबुद्धितः निर्णयं च** उक्तवन्तः. तत्र हेतुः **मर्यादाभङ्गतः** इति, यदिहि अध्ययने विधिः न अङ्गीक्रियेत तदाहि-'' अग्निहोत्रादिषु अधीतवेदानां त्रैवर्णिकानामेव अधिकारो न अनधीतवेदानां शूद्राणाम्''



इति नियमात्मिका मर्यादा भज्येत. असति अध्ययनविधौ विद्वांसम् अधिकृत्य प्रवर्तमानानि अग्निहोत्रादिशास्त्राणि विद्यां विना अनुष्ठानासम्भवाद् विद्याम् आक्षिपन्ति अविशेषात् चतुरोऽपि वर्णान् अधिकुर्युः. सतिच अध्ययनविधौ ''वसन्ते ब्राह्मणमुपनयीत'' (आप.ध.सू.१।१।२०) इत्यादिवाक्येषु द्वितीयानिर्देशाद् उपनयनसंस्कृताः त्रैवर्णिकाः ''किम् अस्माभिः कर्तव्यम्?'' इति अपेक्षन्ते; तत्संनिधौ च अनिर्दिष्टकर्तृकम् अध्ययनं कर्तारम् अपेक्षत-इति अपेक्षासंनिधियोग्यत्वैः

---

१.'याज्ञवल्क्येपि' इति मो.ते.गो. पाठः २.'ज्ञानम्' इति ते.गो.पाठयोः शोधिनिका ३.'प्रैषानुवाद'इति पौरुषोत्तमो मुद्रितः पाठः

एवं ज्ञायते यत् त्रैवर्णिकैः उपनीतैः अध्ययनेन अक्षरग्रहणपरम्पपरया अर्थज्ञानं कर्तव्यम् इति.

एवम् उपनयनाध्ययनविध्योः एकवाक्यत्वे त्रैवर्णिकानां यज्ञाद्यधिकारार्थो अयं[१] नियमविधिः.

एतेन *''विमतं वेदाध्ययनं अर्थज्ञानहेतुः, अध्ययनत्वात्, भारताध्ययनवद्'' इति अनुमानेन अर्थज्ञानस्य प्राप्तत्वात् तदर्थं न अपूर्वविधिः. अनारभ्याधीतत्वात् श्रुत्याद्यभावात् च न क्रत्वर्थं नियमविधिः, अतो अदृष्टार्थमेव स्वाध्यायाध्यनविधिरिति अक्षरमात्रग्रहणं कृत्वां समावर्तितव्यं; नतु अर्थज्ञानाय गुरुगृहे स्थित्वा ''वेदमधीत्य स्नायाद्'' (द्र.:म.स्मृ.३।१-४) इति स्मृतिः बाधनीया इति* पूर्वपक्षोऽपि निरस्तो, दृष्टस्य फलस्य लाभे अदृष्टकल्पनायाः अनुचितत्वात्.

नच *अध्ययने विधेः कल्पने तत्र नियोज्यकल्पनापत्तिः, अध्यापनविधिना तत्प्राप्त्यङ्गीकारेतु उपनीतस्य अध्यापने अधिकारात्, ततएव अध्ययनप्राप्तेः न तत्कल्पनमिति लाघवम् इति* वाच्यम्, 'उपनयति'कर्मत्वेन विवक्षिते माणवके 'ब्राह्मणम्' इत्यादिकया द्वितीयया प्राधान्यबोधनाद् उपनयनस्य माणवकसंस्कारतया [२]प्रधानकर्मत्वाभावेन अध्यापनार्थतायाः अयुक्तत्वाद् अध्ययनार्थतैव अन्तरङ्गत्वाद् वक्तव्या. तथा सति अध्ययनविधौ उपनीतस्य विश्वजिदादिवत् नियोज्यत्वकल्पनम् आवश्यकमिति गुरुभूतस्यापि तस्य प्रामाणिकत्वेन अदुष्टत्वाद्, अध्ययनविध्यानर्थक्यस्य च उक्तनियमेनैव वारितत्वात्.

अतो अध्ययने विध्यनङ्गीकारे उपनयनविधौ (१)अदृष्टकल्पना (२)संनिधिवैयर्थ्यम् (३)अधिकारिनियमभङ्गः च इति दोषत्रयम्. तत्र तदङ्गीकारेतु-(१)उपनयनस्य फलं दृष्टम् अध्ययनं (२)तस्यच अर्थज्ञानं (३)तस्यापि अनुष्ठानम्-

इति न क्वापि अदृष्टकल्पना नापि संनिधिवैयर्थ्यम् नापि अधिकारिनियमभङ्ग–इति विध्यर्थएव कृत्यः इति अर्थः.

एवं तन्मतम् अनूद्य तस्य शैथिल्यं बोधयन्ति **अध्यापन**...इत्यादि. हि यतो हेतोः अध्ययनं **अध्यापनप्रयुक्तं तस्माद् अध्यापनमेव**

---

१. '''स्वाध्यायोऽध्येतव्यः' इति अयं नियमविधिः''इति ते.पाठे पादटिप्पणी.

२. '''प्रधानकर्म क्रियाकर्मभावना' इति पाठः''इति ते. शोधनम्.

पूर्वोक्तदोषनिवारकं गुणजनकं च **मतम्. ''अध्ययनं मतम्''** इति पाठेतु– यस्मात् केचित् शब्दार्थम् अनपेक्ष्य तथा जगुः, तस्माद् हि निश्चयेन **अध्ययनम् अध्यापनप्रयुक्तं मतम्**–इति 'यत्'–'तदोः' नित्यसम्बन्धेन 'यस्माद्' इति अध्याहृत्य योजनीयम्. **एतर्हि** इदानीम् अपि तथैव अध्ययनम्. ततो दृष्टानुरोधाद् उक्तरीत्या कल्पनं न कार्यम्.

अयम् अर्थः. यद् उक्तं–''त्रैवर्णिकाः कर्तव्यम् अपेक्षन्ते, अध्ययनं च कर्तारम् अपेक्षत–इति अस्ति परस्पराकाङ्क्षा''–इति, तत् तथैव. परन्तु एतद् विचारणीयं: किम् अध्ययनं विद्वत्तायोग्यं कर्तारम् अपेक्षते तदयोग्यं वा? इति. न अन्त्यः, तादृशे फलानिष्पत्तेः. आद्यः चेत्, तदा ''माणवकं न अपेक्षते'' इत्येव वक्तव्यं, फलोपधायिकायाः योग्यतायाः तत्र अभावात्. नच त्रैवर्णिकाधिकार–नियम–व्याहतिः, ''अष्टवर्ष...''– वाक्ये उपनयनाध्यापनयोः संनिधानाद्; अध्ययनं विना च अध्यापनासिद्धेः, तदाक्षिप्तेनैव अध्ययनेन उक्ताधिकार–नियम–सिद्धेः. अतो अध्ययने पुनः विधिकल्पनं व्यर्थम्. नच अध्ययनवाक्यवैयर्थ्यं, वेदस्य स्वाध्यायत्वाय तदावश्यकताबोधनेन अर्थवत्त्वाद् इति उक्तम्. नच आवश्यकार्थे अनुशासनाभावः शङ्क्यः, ''आवश्यकाधमर्ण्ययोर्णिनिः'' (पाणि.सू.३।३।१७०) इत्येतदनन्तरं पठितेन ''कृत्याश्च'' (पाणि.सू.३।३।१७१) इति सूत्रेण तत्र अनुशासनात्. नच *अध्यापननियोगे [१]नियोज्याभावाद् अध्यापनसमभिव्याहृतेन 'उपनयीत' इति आत्मनेपदेन आचार्यकरणलाभे तत्कामिना नियोज्याकाङ्क्षा पूरणीया, तथा सति अध्यापनस्य आचार्यत्वसिद्धिरेव प्रयोजनं नतु अर्थज्ञापनम्. ततश्च सिद्धे आचार्यत्वे तस्य अर्थज्ञापनावश्यकत्वाभावात् माणवकस्य अविद्वत्तायां यज्ञाद्यनधिकारतादवस्थ्यम् इति* वाच्यम्, आचार्यलक्षणस्मृतिस्थस्य 'सरहस्यम्' इत्यादिविशेषणस्य बलेन आचार्यत्वशरीरएव अर्थज्ञापनस्य प्रविष्टतया तस्य ज्ञापनावश्यकत्वे शिष्यस्य सुखेन विद्वत्त्वसम्भवात्.



नच सकृद् उच्चारितस्य 'लिङ्'प्रत्ययस्य विध्यर्थत्वम् अर्थज्ञापनार्थत्वं च इति साध्यद्वयापत्त्या वैरूप्यम् इति शङ्क्यम्, अर्थज्ञापनस्य आचार्यत्वरूपाद् अर्थादेव प्राप्त्या विधेः तादर्थ्यस्य अकल्पनात्. नच–एवं

---

१. '''विधिनियोज्यस्याध्यापकस्याभावाद्' इत्यर्थः''इति ते.पाठे पादटिप्पणी.

वैरूप्याभावेऽपि अध्यापनाक्षिप्तम् अध्ययनं किम् अर्थज्ञानार्थम् उत आचार्यत्वार्थम्? आद्ये अध्ययनस्य स्वाध्यायसंस्कारत्वाद् गुणकर्मत्वं द्वितीयेतु नियोगार्थत्वात् प्रधानकर्मत्वम् इति वैरूप्यापत्तिः इति–वाच्यं, व्यक्तिभेदेन अदोषाद्, आद्यस्य प्रधानकर्मतायाः अनन्तराणां गुणकर्मतायाः सुखेन वक्तुं शक्यत्वात्.

ननु *''अष्टवर्ष...''–वाक्योक्ते विधिद्वये नियोज्यानुक्तावपि, 'उपनयीत'इत्यस्य समभिव्याहाराद्, आचार्यत्वकामिनएव उभयत्रापि नियोज्यता उच्यते. कर्मतातु आद्ये त्रैवर्णिकमाणवकस्य–द्वितीयेतु तस्यैव उपनयनसंस्कृतस्य इति एतावान् विशेषः. प्रतीयतेच उपनयनाध्यापनयोः उभयोरपि माणवकप्राधान्यबोधिकया द्वितीयया[१] माणवकसंस्कारत्वाद् गुणकर्मत्वं, नियोज्यविचारेतु उभयोरपि आचार्यत्वसिद्ध्यर्थत्वात् प्रधानकर्मत्वमिति* वैरूप्यन्तु दुर्वारम् इति चेत्, न, द्वितीयायाः प्राधान्यबोधकत्वस्य अनियतत्वाद् ''विप्राय गां ददाति'' इत्यादौ व्यभिचारात्. अतो न द्वितीयया संस्कारकर्मत्वनिश्चयः किन्तु उपनयनस्य संस्कारेषु स्मरणात् संस्कारकर्मत्वं, तस्य च माणवकसमवेतत्वेन अन्तरङ्गत्वाद् अध्ययनाङ्गत्वेऽपि 'तम्' इति द्वितीयान्तेन संस्कारविशिष्ट–माणवकपरामर्शात्, तस्य च ''वत्समालभेत'' (तै.सं.२।१।४।७) इत्यत्र वत्सस्य आलभनाङ्गत्ववद् अध्यापनाङ्गत्वे सिद्धे, तद्विशेषणस्य उपनयनस्यापि परम्परया अध्यापना'त्वं निर्बाधम्. तथापि न साक्षाद् आचार्यताहेतुत्वं तावन्मात्रेण तदसम्भवात्. अतः आत्मनेपदेनापि परम्परया अङ्गता बोध्यते नतु साक्षाद् अङ्गता. अध्यापनस्यतु साक्षादेव आचार्यताहेतुत्वं, तद्विना तदभावात्. अतः तस्य प्रधानकर्मत्वमिति साक्षात्परम्पराविभागे न कोऽपि वैरूप्यलेशः. एवञ्च आत्मनेपदस्य विशेषविधानमपि सार्थकं भवति, उपनयनफलस्य अध्ययनस्य कर्त्रगामित्वात्. उपनयनस्य [२]आचार्यताहेतुत्वेतु ञित्वादेव 'नयतेः' आत्मनेपदसिद्धेः विशेषविधानवैयर्थ्यमेव स्यात्. नच *''अग्नीनादधीत''[३] ( ) इत्यत्र यथा आधानफलस्य आहवनीयत्वादेः अग्निसमवेत

१.''माणवकसंस्कारे हेतुः''इति ते.पादटिप्पणी. २.'हेतुत्वेन'इति ते.पादटिप्पणी. ३.''अग्नीऽआदधीत''इति पाठान्तरेण (श.ब्रा.२।१।३।४).

त्वेऽपि न तादर्थ्यम् इति आत्मनेपदबलाद् अध्यवसीयते, तथा अत्रापि उपनयनफलस्य संस्कारस्य माणवकसमवेतत्वेऽपि न तादर्थ्यम् अपितु आचार्यार्थत्वमेवेति विशेषविधानवैयर्थ्यम् * आशङ्कनीयं, साक्षाद् आचार्यार्थत्वाभावस्य उक्तत्वात् परम्परया तादर्थस्य च अप्रयोजकत्वात्. विधिद्वयसमभिव्याहारेण तादर्थ्यपरम्परायाः अध्यापना'तायामेव पर्यवसानात्. परम्परयापि न अध्यापनाङ्गत्वम् इति न वक्तुं शक्यं, 'तम्' इत्येतेन पूर्वपरामर्शस्य विरोधापत्तेः. एतेनैव * यथा ''त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुम् उपाकरोति'' (आप.श्रौ.सू.१२।१८।१२) इति यूपपरिव्याणं यूपार्थं नतु उपाकरणार्थं; तथा 'उपनीय'-इति स्मृत्युक्तम् उपनयनं माणवकसंस्कारार्थं नतु अध्यापनार्थम् इति * अपि प्रत्युक्तं, 'तम्' इति श्रौतेन पदेन प्रमितायाः परम्पराङ्गतायाः दृष्टान्तमात्रेण बाधितुम् अशक्यत्वात्.

यत्तु - उपनीतव्यापारापेक्षायाम् उपनयनं प्रक्रम्य विहितस्य अध्ययनस्य अध्यापनोपकारकत्वे तच्छेषत्वाद् अर्थज्ञानार्थता न स्यात्, साध्यद्वयस्य एकत्र असम्भवाद् इति - उक्तं, तदपि शिथिलम्, एकस्मिन्नेव भोजने प्रतिकवलं तुष्टि-पुष्टि-क्षुदपायानां दर्शनाद्; एकेनैव वाहनकरणकेन गमनेन सुखविशेषस्य उद्देश्येदेशप्राप्तेः च दर्शनाद् इति. यदपि * अध्यापनस्य अध्ययनम् अन्तरेण असम्भवात् पदार्थस्वभावाक्षिप्तम् अध्ययनं लौकिकमेव अङ्गीकार्यं, तावतापि अध्यापनसम्भवाद्, विहितस्यापि ततएव अङ्गीकारेतु ततो न अपूर्वं सिध्येद्, उद्देशाभावाद् इति * उक्तं, तदपि तथा, लौकिकस्य तस्य अङ्गीकारे आचार्यत्वासिद्धेः, वेदाध्यापनेनैव तत्स्मरणात्. नच अपूर्वासिद्ध्यापत्तिः, आचार्यकृतोद्देशेनापि तत्सम्भवाद् जातेष्टौ पितृकृतौद्देशवदिति.

किञ्च, ''वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकं[१] वेदाध्ययनसामान्याद् अधुनाध्ययनं यथा'' (श्लो.वा.:वाक्याधि.३६६) इति आधुनिकाध्ययनं दृष्टान्तयद्भिः अध्ययनस्य अध्यापनप्रयुक्तत्वेऽपि स दृष्टान्तः अ'ीकार्यः. तस्माद् अध्ययने अधिकारनियमस्य अध्यापनविधिनैव सिद्धेः कृत्ये विध्यर्थत्वकल्पनं वृथैव, उक्तप्रकारं विना तावन्मात्रेण वेदस्य स्वाध्यायत्वासिद्ध्या ततः फलासिद्धेः इति ।।१६-१७।।

---

१.''गुर्वध्यापन...'' इति ते.-गो.पाठः, मो.पाठस्तु 'गुर्वध्ययनपूर्वकम्' इत्येव.





एवं प्रकारबोधनपूर्वकं मतान्तरनिराकरणेन वेदस्य यथा स्वाध्यायत्वसिद्धिः तत् साधितम्. तन्मध्ये शब्दार्थानुष्ठानेषु शङ्काराहित्यं प्रविष्टं, तत्र शब्दे तद्राहित्यस्य गुरुपरम्परया सिद्धेः पदार्थे अनुष्टाने च तद्राहित्यस्यापि अङ्गविचारादिभिरेव सिद्धेः वाक्यार्थे सन्देहो अवतिष्ठते तद् आहुः -

**तत्र संशयमापन्ना बुद्धिर्वाक्यार्थनिर्णये।**
**एकवाक्यत्वसन्देहाद् ऐकार्थ्याभावतः स्फुटम्।।१८।।**

तत्र इत्यादि. ऐकार्थ्याभावतः इति, यागदानादिरूपाणां नानार्थानां तत्र नानाफलानां च प्रतिपादनेन तथात्वात्।।१८।।

तथा सति को दोषः इति आकाङ्क्षायां सार्धेन तन्निराकृतेः आवश्यकत्वाय आहुः -

**स एकोऽर्थोऽत्र वक्तव्यो यच्छरीरप्रवेशतः।**
**एकार्थतां श्रुतिर्याति तदभावे तु निष्फला।।१९।।**
**कुण्ठितैव भवेन्नूनं वेदाध्ययनबोधने।**

सः इत्यादि. तथाच तदभावे वेदाध्ययन-बोधक-वाक्यत्रय-वैयर्थ्यमेव दोषइति तदभावाय वेदस्य ऐकार्थ्यम् अवश्यमेव विचारणीयं; तत् च अङ्गः न सिध्यति इति अर्थः।।१९।।

तर्हि तत्र का गतिः ! इति आकाङ्क्षायां मीमांसैव गतिः इति आहुः वेदोऽखिलो इत्यादि द्वाभ्यां -

**''वेदोऽखिलो धर्ममूलं'', ''धर्मो यस्यां मदात्मकः'' ।।२०।।**

**एवं पूर्वर्षिभिः प्रोक्तं जैमिनिः प्रथमं स्वयम्।**
**निश्चित्य लोकशिक्षार्थम् अर्थप्राधान्यतस्तथा।।२१।।**
**धर्मं विचारयामास प्रामाण्यादिपुरस्सरम्।**

अत्र प्रथमं वाक्यं मानवं (म.स्मृ.२।६) द्वितीयम् एकादशस्कन्धीयं भागवतम् (भाग.११।१४।३). तत् सर्वं पूर्वप्रोक्तं **जैमिनिः प्रथमं स्वयं निश्चित्य** पश्चात् **लोकशिक्षार्थम्** अर्थप्राधान्यम् अङ्गीकृत्य **प्रामाण्यादिपुरस्सरं** को धर्मः, कथं तस्य धर्मत्वं, कथं च वेदस्य तत्प्रमितिजनकत्वं, कथं च वेदस्य निर्दुष्टत्वं येन प्रमाणान्तरविरोधेऽपि तदुक्तमेव आदर्तव्यम् इत्यादिसर्वविचारपूर्वकं **धर्ममेव तथा** सर्ववेदार्थत्वेन विचारयामास इति अर्थः।।२१-२२।।

तर्हि किम् अवशिष्टं येन अयम् उद्यमः इत्यतः आहुः-

**सन्देहस्तु पुनर्जातो वेदान्तेषु यथा पुरा।।२२।।**
**एकवाक्यत्वमेषां हि धर्मकाण्डे कथं भवेत्।**

**सन्देहस्तु पुनः** इत्यादि. **यथा पुरा** इति ऐकार्थ्याभावतः. **हि** निश्चयेन. ब्रह्मबोधकानाम् **एषां** वेदान्तानां **धर्मकाण्डे एकवाक्यत्वं कथं भवेद्** इति तदर्थम् अयम् उद्यमः इति अर्थः।।२२।।

कथम् ऐकार्थ्याभावः! इति आकाङ्क्षायां सन्देहबीजं व्युत्पादयन्ति धर्मः इत्यादिना सपादेन-

**धर्मः पञ्चविधो द्वेधा षड्भिः सम्पद्यते तु सः।।२३।।**
**देश-काल-द्रव्य-कर्तृ-मन्त्र-कर्म-विभेदतः।**
**सर्वो वेदस्तेषु लीनो..................।।**

अग्निहोत्र दर्शपूर्णमास चातुर्मास्य पशु सोम भेदेन **धर्मो** यज्ञात्मकः **पञ्चविधः**. सएव प्रकृतिविकृति-भेदेन द्विधा. देशादीनि षट् तत्साधनानि इति



तैः **षड्भिः सम्पद्यते इति** सिध्यति, अतः, **सर्वो वेदः** पूर्वकाण्डरूपः **तेषु** सर्वेषु **लीनो** धर्मं धर्मसाधनानि च बोधयन् ऐकार्थ्यं प्राप्य समाप्तः, निराकाङ्क्षताम् आपन्नो, वेदान्तान् न संगृह्णाति इत्येतत् सन्देहबीजम् इति अर्थः।।२३।।

(वेदवेदान्तयोः भाट्टैकदेश्यभिप्रेतायाः एकवाक्यतायाः प्रकारः)

ननु यथा एकार्थत्वम् एकवाक्यतानियामकं तथा विभागे-साकाङ्क्षत्वमपि नियामकान्तरम्. तथा भट्टकारिकापि-''स्वार्थबोधे समाप्तानाम् अङ्गाङ्गित्वाद्यपेक्षया. वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते'' (तं.वा.१।४।२८) इति, तद् अभिप्रेत्य मतान्तरम् आहुः वेदान्तेषु इत्यादि सपादेन-

**.................वेदान्तेषु विचार्यते।।२४।।**
**''यदेव विद्यये'' त्याह ''ब्रह्मा ब्रह्मिष्ठ'' एव च।**
**तज्ज्ञानं तेषु हि प्रोक्तं कर्तृशेषास्ततस्तु ते।।२५।।**

**विचार्यते** इति पूर्वमीमांसकैः विचार्यते. आह इति, ''यदेव विद्यया करोति तत्तदेवास्य वीर्यवत्तरं भवति'' (छा.उ.१।१।१०) इति, ''ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीते'' (आप.श्रौ.सू. ३।१८।१) इति क्रमेण वेदान्तश्रुतिः कल्पश्रुतिः च आहः. तथाच वेदान्तार्थस्य ज्ञानस्य अङ्गीभूतकर्मापेक्षा; वेदार्थस्य धर्मस्य च अङ्गभूतज्ञानापेक्षा, अतः तादृशज्ञानवत्कृतत्वेन तेषां कर्तृशेषत्वाद् अस्त्येव एकवाक्यता.

किञ्च ''इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या. दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन'' (श्लो.वा.१।१।५।१४८) इति भट्टः प्रकारान्तरमपि एकवाक्यतायाम् आहेति कुतः सन्देहः आपाद्यते इति अर्थः।।२४-२५।।

(तद्दूषणम्)

एतम् एकवाक्यताप्रकारं दूषयन्ति ज्ञाननिष्ठाय इत्यादिभिः सार्धैः त्रिभिः –

**''ज्ञाननिष्ठाय देयानि कव्यानी''ति यथा तथा।**
**फलश्रुत्या पूर्वकाण्डसमाप्त्या चावगम्यते ।।२६ ।।**
**''ब्रह्मविद् ब्रह्म भवति'', ''परं वाप्नोति'' कुत्रचिद्।**
**''वेदमनूच्य आचार्य'' इत्युक्तोपनिषद्वचः ।।२७ ।।**
**शास्त्रान्तरेऽप्येवमेव वैदिकानां मतं तथा।**
**अतः स्वतन्त्रता वाच्या तथा चेन्नैकवाक्यता ।।२८ ।।**
**''वेदोऽखिलो धर्ममूलम्'' इत्यादिश्च विरुद्ध्यते।**

इदं वाक्यं सप्तम भाग.७ ।१५ ।२ स्कन्धीयम्. तत्र यथा पितृणां तृप्त्यानन्त्याय ज्ञाननिष्ठाय कव्यदानम् उक्तं, तावता न ज्ञानस्य श्राद्धशेषत्वं[1] * सिध्यति, दानफलानन्त्येन कर्त्रनुग्रहार्थं सम्प्रदानतायाः अनुमतिमात्रत्वात्. अन्यथा ''ज्ञाननिष्ठः कव्यानि भुञ्जीत'' इत्येव विदध्यात्. एवं ब्रह्मिष्ठवाक्येऽपि अनुमतिरेव क्रियते, ब्रह्मदृष्ट्या कर्मवैषम्यनिवृत्त्या तदनुग्रहार्थम्. वस्तुतस्तु तत्र 'ब्रह्म'शब्दः वेदपरइति न तेन वेदान्तस्य कर्तृशेषत्वसिद्धिः; नापि ''यदेव...'' (छा.उ.१ ।१ ।१०) इति श्रुत्या तस्याः उद्गीथप्रकरणावरुद्धत्वेन विद्यान्तरासङ्ग्राहकत्वात् उद्गीथविद्यायाः कर्माङ्गत्वेऽपि अक्षतेः. अतो अनुमतस्य प्रासङ्गिकत्वेन ग्रामं गच्छतः तृणस्पर्शवद् भिक्षां चरतः तस्य कव्याशनस्य प्रासङ्गिकत्वात् न तेन शेषत्वसिद्धिः. भट्टकारिकोक्तप्रकारस्तु भाष्यप्रकाशे दूषितइति न अत्र दूष्यते. तथाच * पारार्थ्यमेव जैमिनीये मते शेषलक्षणं तत् च श्रुत्यादिभिः अवगम्यते. तथा सति ''कर्माण्यपि जैमिनिः फलार्थत्वाद्'' (जै.सू.३ ।१ ।४) इति सूत्रे कर्मणः फलशेषत्वं पूर्वकाण्डे प्रतिपाद्यतइति न तस्य ज्ञानशेषत्वम्. तथा ज्ञानस्यापि फलशेषत्वम् उत्तरकाण्डे प्रतिपाद्यते, ''ब्रह्म वेद ब्रह्मैव भवति'' (मु.उ.३ ।२ ।९) इति, ''ब्रह्मविदाप्नोति परम्'' (तै.उ.२ ।१ ।१) इति. अन्येऽपि देशकालादयो ये

१. जूनागढ़पाठे इतः आरभ्य – ''इति अवगम्यते. उपकारमात्रेण शेषतायाः असम्भवात्. गर्भदासोपरि कोणिस्वामिनि तस्य लक्षणस्य व्यभिचारात्. तथा ज्ञानस्य धर्मशेषत्वमपि न इति फलश्रुति–पूर्वकाण्डसमाप्तिभ्याम् अवगम्यते यतः



पारार्थ्यमेव जेमिनीये मते...'' इत्येतावती भिन्नैव फक्किका उपलभ्यते. मो.ते.गो.पाठेषु स्थितः *...* चिह्नांकितो भागश्च नोपलभ्यते.

उच्यन्ते ''विविक्तदेशे च सुखासनस्थः'' (कैव.उ.५) इत्यादौ तेपि तत्साधनभूताइति सर्वे वेदान्ताः, ज्ञानमेव सफलं बोधयन्तो निराकाङ्क्षताम् आपद्यमानाः, न शेषित्वेन कर्म अपेक्षन्ते; नापि वेदो ज्ञानं शेषत्वेन अपेक्षते. 'ब्रह्म'शब्दस्य शब्दब्रह्मण्यपि वृत्तेः 'ब्रह्मिष्ठ'शब्देनापि वेदार्थनिष्णातस्य ग्रहीतुं शक्यत्वात्. तस्मात् न कर्तृशेषत्वं; नापि विविक्तात्मस्वरूपबोधकत्वेन, वैराग्यापत्त्या कर्मानधिकारापादकत्वात्. देहविशिष्टस्तु न तत्र बोध्यतइति कथमपि वेदान्तानां न वेदशेषता.

किञ्च ''वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति'' (तै.उ.१ ।११ ।१) इति शिक्षोपनिषदि तैत्तिरीयाणां श्रूयते. तत्रच 'अनूच्य' इति वेदपाठनसमाप्तिबोधनादपि शेषत्वं न युक्तम् इति अर्थः. किञ्च शास्त्रान्तरेऽपि एवमेव फलभेदेन समाप्तिभेदेन च शास्त्रभेदो अवगम्यते. तथा वैदिकानामपि एवमेव भेदो अवान्तरकाण्डानां मतः. अतो भेदकानां बहूनां सत्त्वात्; संहर्तुः हेतोः च अभावात्, स्वतन्त्रता उपनिषदां वाच्या – भिन्नशास्त्रत्वमेव आस्थेयम्. तथा चेद् युक्तिभिः प्रमाणैः च तथा निश्चितं चेत्, तदा न एकवाक्यता घटते. अतः तदुक्तः प्रकारो न युक्तः इति अर्थः.

किञ्च शास्त्रभेदानङ्गीकारे पूर्वोक्तस्मृतिविरोधोऽपि इति आहुः वेदः इत्यादि. अत्र स्मृतौ 'अखिल'पदाद्; धर्मस्य च क्रियारूपत्वाद्, ज्ञानप्रतिपादकवेदान्तसङ्ग्रहे तस्य बाधाद्, द्वितीयवाक्ये 'धर्म'पदाच्च विरुद्ध्यते इति अर्थः।।।।२६–२८।।

अत्र पुनः मतान्तरम् उपक्षिप्य दूषयन्ति –

**वैदिकानामभिध्यानं स्वरादिनियमैर्युतम् ।।२९ ।।**
**वेदाएव नचान्यार्था वाच्या बुद्धिमता क्वचित्।**

**अतो वेदान्तवाक्यान्याप्रसिद्धिः. वैदिकानामपि तथैव प्रसिद्धेः इति चेद्. एवं लोकसिद्धस्य जगतो लोकप्रतीतिं बाधित्वा ब्रह्मत्वेन अलौकिकत्वं सम्पाद्यतइति अर्धजरतीयन्यायात् तदन्तत्वम्.**

**वैदिक**...इत्यादि. यतो वैदिकाः स्वरपूर्वकम् अनध्यायादि-त्यागनियम- पूर्वकं वेदान्तान् पठन्ति पाठयन्ति चेति **वैदिकानां** वेदान्तेषु 'वेद' इति **अभिध्यानं, स्वरादिनियमैः** युतं वर्तते, अतो वेदाएव. क्वचित् वेदान्तभागे अन्यार्थाः धर्मव्यतिरिक्तब्रह्मार्थाः, **बुद्धिमता नच वाच्याः** नैव वाच्याः. अतः इदं मतम् अप्रयोजकम्. तत्र हेतुः **अतः** इत्यादि. अतो 'वेदः'इति प्रसिद्धेः सकाशाद्, **वेदान्तवाक्यानाम् अन्याप्रसिद्धेः**. शिष्टाः हि वेदान्तवाक्यानि उपन्यस्य ''इति श्रुतेः''-''इति श्रावणाद्'' इत्येव वदन्ति. यदिहि वेदान्तवाक्यानि अन्यार्थानि स्युः तदा 'वेदः'इति प्रसिद्धिं न लभेयुः, 'वेदः'इति प्रसिद्धेः धर्मार्थतामूलकत्वात्. अतो वैदिकाभिध्यानात् वेदान्तेषु यदि वेदत्वम् अङ्गीकार्यं, तदा अन्यार्थता त्याज्या. यदि अन्यार्थता अङ्गीक्रियते, तदा वैदिकाभिध्यानं न आदर्तव्यं, शास्त्रभेदस्य श्रुतिस्मृतिरूप-प्रबलप्रमाण-प्रमितत्वाद्; अभिधानस्य च सदाचारे प्रवेशेन ततो नैर्बल्यात्. पूर्वोत्तर-वाक्यद्वय-संहर्तुः अर्थैक्यस्य अभावे 'वेदः' इति प्रसिद्धिमात्रेण तयोः एकवाक्यतायाः असिद्धेः इति अर्थः.

ननु सत्यम् अभिध्यानस्य श्रुत्याद्यपेक्षया निर्बलत्वं तथापि अनादिप्रसिद्धिबीजं तु वक्तव्यम् इति आशयेन पर्यनुयुङ्क्ते वैदिकानाम् इत्यादि, वैदिकानामपि तथैव 'वेदः'इतिवत् 'वेदान्तः'इत्येव प्रसिद्धिः. तथाच वेदान्तेषु वेदत्वानङ्गीकारे प्रसिद्धिवैयर्थ्यम् आपद्यमानं तस्य बलिष्ठत्वं कल्पयिष्यति, ''आनर्थक्ये प्रमाणानां विपरीतं बलाबलम्''[१] इति न्यायात्, ''वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे पात्राणि तु दहेदग्नौ साग्निके पापकर्मणि'' (भवि.पुरा. ) इति स्मृत्या ''आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च'' (द्र.:मी.को.:पृ.१०२१) इति श्रुतिबाधदर्शनात् च. अतो वैदिकप्रसिद्ध्या अपौरुषेयशब्दत्वेन च वेदान्तेषु वेदत्वम् अवश्यं वक्तव्यम्. ततश्च मीमांसकोक्तरीत्या एकवाक्यत्वाभावेऽपि ''तमेतं वेदानुवचनेन'' (बृ.उ.४।४।२२) इति वेदान्तश्रुत्या वेदान्तानामेव वेदापेक्षा वक्तव्या. तथा सति अपेक्षया सिद्धे एकवाक्यत्वे ''वेदस्य अन्तो यत्र'' इति योगेन वेदोत्तरभागत्वाद् 'वेदान्तः' इति प्रसिद्धिरपि सेत्स्यतीति, न कश्चिद् दोषः

---

१. ''आनर्थक्यप्रतिहतानां विपरीतम्'' इति प्रसिद्धपाठः. द्र.:लौ.न्या.सा.७४४.

इति चेत्.

[१]एवं पर्यनुयोगे 'वेदान्तः' इति प्रसिद्धिम् अन्यथा वक्तुं प्रकारान्तरं प्रतिजानन्ति- **एवम्** इत्यादि, वक्ष्यमाणप्रकारेण इति अर्थः. तम् आहुः **लोक**...



इत्यादि[२]. तथाच यथा **लोकसिद्धस्य** व्रीह्यादेः **लोकप्रतीतिं** बाधयित्वा प्रोक्षणादिना **अलौकिकत्वं सम्पाद्यते;** तथा वेदान्तेषु उक्तरीत्या जगतो **ब्रह्मत्वं सम्पाद्यते.** साधनन्तु प्रोक्षणवत् तदर्थं न उच्यते इति अतः **अर्धजरतीयन्यायात्, तथेति[!]** एतेन प्रकारेण प्रसिद्धिः सम्भवतीति 'वेदान्तः' **इति** प्रसिद्धेः प्रकारान्तरेण सम्भवे ताम् आदाय श्रुतिस्मृतिविरुद्धो अन्यार्थताङ्गीकारः न युक्तः. 'तमेतं...' (बृ.उ.४।४।२२) इति वाक्ये यज्ञादीनां विविदिषापर्यन्तत्वश्रावणेन विविदिषामात्रस्य च ब्रह्मज्ञानजनकत्वाभावेन तयापि संनहनस्य वक्तुम् अशक्यत्वाद् एकवाक्यता दुर्घटा इति अर्थः ।।२९।।

एवं प्रसिद्धिप्रकारम् अनुपपन्नं मन्यमानः पुनः शङ्कते-

**ननु लोकनिपुणाः कथं मन्यन्ते ? ''शब्दार्थविचारेण'' इति ब्रूमः. कथम् ? शब्दानाम् अर्थे विचार्यमाणे ब्रह्मैव सर्वं भवति. 'घटपटा'दिशब्दाः धर्मवाचकाएव भवितुम् अर्हन्ति. घटत्वादिविशिष्टवाचकाःहि एते इति लोकप्रसिद्धिः. घटत्वम् इति घटगतो धर्मः कश्चिद्, यत्सद्भावाद् 'घट'पदवाच्यता धर्मिणः. ''तस्य भावः त्वतलौ'' (पाणि.सू.५।१।११९) इति त्वो भावप्रत्ययः. 'भावः' इति 'भू'धातोः घञि रूपम्. 'भू'धातुः सत्तायां व्याप्तौ वा. उभयथापि व्यापकस्य सतो वा धर्मवाचको भवति. 'घञ्'च स्वार्थे, अन्यथा अनवस्था स्यात्. तथाच घटत्वं नाम सतः व्यापकस्य वा**

---

१. इह जूनागढ़पाठे भिन्नैव उत्थानिका- ''तत्र बीजं वक्तुं प्रकारप्रतिज्ञां कुर्वन्ति एवमिति'' इति. २.इह जूनागढ़पाठे-''न्यायस्तु अग्रे व्युत्पाद्यः. तथाच एतेन प्रकारेण प्रसिद्धिः सम्भवति इति अर्थः. एतं प्रसिद्धिप्रकारम् असङ्गतं मन्वानः पर्यनुयुङ्क्ते ननु इत्यादि. लोकनिपुणा इति.'' इत्येतावानंशो भिन्नः उपलभ्यते.

**धर्मः इति उक्तं भवति. एवं पटत्वादिष्वपि. तथाच प्रकृत्यर्थः सन् व्यापको वा यदा भवति तदैव प्रत्ययार्थेन सह एकवाक्यता भवति.**

**ननु लोक**... इत्यादि, मीमांसकाः नैयाय[यि!]काद्याः च ते प्रतीतिबाधितं कथम् अङ्गीकरिष्यन्ति ? तथाच परप्रतिपत्त्यर्थो हि अयं यत्नः सतु तदनङ्गीकाराद् व्यर्थः इति अर्थः.

तत्र तादृग् अनुकूलमेव उत्तरम् आहुः **शब्द**... इत्यादि, तथाच आप्तवाक्यप्रामाण्यस्य तैः सर्वैरेव उपगमात् तदर्थविचारेण उपगन्तव्यम्. अतो न यत्नवैयर्थ्यम्.

पुनः पृच्छति **कथम् इत्यादि**. तत्र उत्तरं व्युत्पादयन्तः आहुः **घट**... इत्यादि. अत्र **धर्मवाचकाः** इति घटाद्यवच्छेदको नित्यो यो धर्मः तद्वाचकाः इति आकृत्यधिकरण(जै.सू.१।३।१०।३०-३५)सिद्धः मीमांसकसिद्धान्तः **लोकप्रसिद्धिः** इति नैयाय यि!कादीनां प्रसिद्धिः. एवं तत्तन्मतीयः शब्दार्थः उक्तः. एवं मतद्वयेऽपि धर्मस्यैव मुख्यतया तत्तच्छब्दप्रवृत्तिनिमित्तत्वम् इति आहुः **घटत्वम्** इत्यादि. अतः परं तद्विचारेण सर्वस्य ब्रह्मत्वप्रकारं व्युत्पादयन्ति **तस्य** इत्यादि **एकवाक्यता भवति** इत्यन्तम्. **घञ् च स्वार्थे** इति विधीयमानो यो भावः तस्मिन्नेव नतु भावान्तरे; **अन्यथा अनवस्था स्याद्** इति, यदि भावान्तरे अङ्गीक्रियते तदा, 'त्व'शब्दो भावे, 'भाव'शब्दः च 'घञा' निष्पन्नो भावान्तरे, 'घञ्'(पाणि.सू.३।३।११-१८)सूत्रस्थो 'भाव'शब्दः च भावान्तर-इति एवम् अनवस्था स्यात्. यदिच तत्र अगत्या स्वार्थे अङ्गीक्रियते तदा प्रथमएव तथा अस्तु. आत्माश्रयस्तु न आशङ्कनीयः पूर्वपक्षवादेऽपि तौल्यात्, व्यवहारोच्छेदप्रसङ्गात् च. तदेतत् प्रागेव उक्तं लोके **शब्दार्थसम्बन्धः** इति कारिकया. एवं स्वार्थे अङ्गीकाराद् यत् सिध्यति, तद् आहुः **तथाच** इत्यादि, अत्र **तदैव** इति **'एव'** कारेण पदार्थानां सद्भिन्नत्वाङ्गीकारे 'त्वतला'दिप्रत्ययोक्तः [१]सद्धर्मो, अन्यधर्मत्वाद् यथा घटत्वं न पटावच्छेदकं,

---

१. मो.-मुं.वि.- जूना.-पाठानुसारेण, ते.-गो.पाठस्तु "स धर्मः" इति.

तथा घटाद्यवच्छेदको न स्यात्; ततश्च व्यवहारः सर्वोऽपि प्रतिरुद्ध्येत इति बोध्यते. अतः पदप्रवृत्तिनिवृत्ति-निमित्तानुरोधेन सर्वेषां 'व्यापक'/'सत्'पदार्थाभिन्नत्वम् अवश्यम् अङ्गीकार्यम्. ततश्च शब्दार्थविचारेण सर्वं ब्रह्मैव भवति इति अर्थः.



अत्र पुनः पर्यनुयुङ्क्ते -

**ततश्च सर्वेषाम् एकार्थता स्याद्! अतः आकृतिविशेषव्यङ्ग्याः धर्माः ते भिन्नाएव, शक्तिसङ्कोचेन, व्यवहारसिद्ध्यर्थं अङ्गीकर्तव्याः. तथाच 'घटा'दिशब्दाः 'अरुणा'दिशब्दवद् धर्मवाचकाः. नच स्वरूपतः सतो भिन्नाः प्रत्यक्षतः स्वीकर्तव्याः इति वाच्यं, कारणीभूतस्य सतः एकत्वात् कार्ये कुतो भेदः समायाति!**

**ततः** इत्यादि, तथाच यदि 'त्व'-'तला'द्युक्ताः भावाः सद्धर्माइति सर्वं सदेव, तदा **सर्वेषां** पदानां 'घट'-'कलशा'दिपदवद् **एकार्थतायां** व्यवहारप्रतिरोधः तुल्यइति व्यर्थः सर्वः प्रयासः इति अर्थः.

अत्र समादधते **अतः** इत्यादि. अतः पदप्रवृत्ति-निमित्तभूत-धर्मस्वरूपानुरोधेन सर्वेषां सद्धर्मवाचकतायाः **लोकयात्रानिर्वाहाय** व्यवहारसिद्धेः च आवश्यकत्वाद्, **आकृतिविशेषव्यङ्ग्याः** कम्बुग्रीवाद्यातानवितानादि-सास्नादिमदाकृति-विशेषप्रकाश्याः, **सतो धर्माः** ते घट-पट-गवाद्याः **भिन्नाः** सतः सकाशाद् व्युच्चरणेन विलक्षणप्रतीतिविषयाः [१]**एव शक्तिसङ्कोचेन "अयं शब्दः** एतदाकारकमेव सद्धर्मं बोधयतु न अन्याकारकम्" इति एवम्प्रकारेण ईश्वरकृतेन वाचकशक्तेः नियमनेन, **व्यवहारसिद्ध्यर्थम् अङ्गीकर्तव्याः. तथाच "'घटा'दिशब्दाः 'अरुणा'दिशब्दवद् धर्म-वाचकाः"** इति अङ्गीकारे सर्वेषां ब्रह्मत्वस्य ऐकार्थ्येऽपि

---

१. ते.-गो.पाठस्तु 'एवम्' इति. वस्तुतस्तु मूलपत्रावलम्बनप्रतीकोऽयम्.

व्यवहाराप्रतिरोधस्य च सिद्धेः न प्रयासवैयर्थ्यम् इति अर्थः.

ननु शब्दः प्रत्यक्षं च इति उभयमपि प्रमाणं, तयोः शब्दापेक्षया प्रत्यक्षमेव प्रबलं, शब्दोपजीव्यत्वात् सर्वसम्मतत्वात् च. अतः प्रत्यक्षतः प्रतीयमानं **स्वरूपतो** भेदेन सत्त्वं भेदं च न्यक्कृत्य शब्दार्थविचारेण सर्वस्य ब्रह्मात्मकत्वसाधनम् अप्रयोजकम् इति आशङ्कायां तत् निषेधन्ति नच इत्यादि. तत्र हेतुः **कारणी**... इत्यादि.

अयम् अर्थः – सत्यं प्रत्यक्षं प्रबलं तथापि न अस्य प्रामाण्यं सार्वत्रिकं, देहात्मनोः भेदेऽपि अभेदस्य, घटाकाश–मठाकाशयोः अभेदेऽपि भेदस्य, प्रत्यायनात्. अतः तन्निश्चयार्थं प्रमाणान्तरम् आश्रयणीयम्. तत्र – ''प्रत्यक्षविषयाः अर्थाः पृथक् सन्तः सतो भिन्नाः, भिन्नकारणकत्वात्, घटपटस्तम्भादिवद्'' इतितु न युक्तम्, ''एते सदभिन्नाः, सदेककारणकत्वात्, सौवर्णकटककुण्डलादिवद्'' इति प्रतिसाधनेन बाधात्. कारणताग्राहकस्य सदन्वयस्य अत्र अनुकूलतर्कत्वेन अस्य प्रबलत्वात्. नच सतो नानात्वं, मानाभावात्. नच एवं 'सत्ता'ख्यजातिमत्त्वस्यैव सिद्धिः न सत्कारणकत्वस्य इति वाच्यं, सत्तायाः जातित्वाभावात्, सामान्यादिष्वपि वर्तमानत्वात्. नच सा प्रतीतिः भ्रमः इति वाच्यं, नियामकाभावात्. तस्याः जातित्वाभिमानस्यैव अभ्युपगमैकशरणत्वेन भ्रमत्वस्य युक्तत्वात्. अतः सद्धर्मएव सत्ता. सा चेत् सर्वत्र, तदा ''सर्वं सदेव''–इति उपपादनम् अन्तरेणैव सिद्धम्. वस्तुतस्तु सत्तायां सत्तान्तराभावात्, ''सदेव सत्ता''–इति, तद्योगादेव सर्वत्र 'सद्' इति प्रत्ययः; सदेव च कारणम्, असतः कारणत्वायोगात्. **अतः कारणीभूतस्य सतः, एकत्वात्,** तस्मिन् भेदाभावे **कार्ये कुतो भेदः समायाति !** कारणगुणानामेव कार्यगुणारम्भकत्वाद् इति.

एवं सर्वस्य सदभेदे साधितेऽपि भेदं विना भिन्नार्थक्रियाकारित्वासम्भवात् तदुपपादनाय कारणएव कुतश्चन भेदो अभ्युपेयः इति आशयेन आह –

**मृदः इव अंशभेदाद्, इति चेद्, अस्तु ! तर्हि अंशेन भेदो अस्ति ! कः सन्देहः ? कार्यकारणयोः भेदः ! इति चेत् न ! ''कार्ये, समवेतत्वात्, कारणमपि अस्ति'' इति मन्तव्यं – तथाच कार्ये द्विगुणगुरुत्वापत्तिः.**

**नवा भेदः प्रतीयते – ''पिण्डावस्था गता घटावस्था जाता'' इत्येव प्रतीतिः. तथाच सतोऽपि अंशेन धर्मभेदएव जगद् जातमिति सद् एकमेव.**

**नच अंशांशिनोः भेदः सिध्यति, पूर्ववदेव द्विगुणभारापत्तेः.**

**मृदः** इव इत्यादि. तत्र इष्टम् अभ्युपगच्छन्ति अस्तु इति. ततः प्रत्यवतिष्ठते



तर्हि इत्यादि. **अंशेन भेदः** इति अंशेन कृतो भेदः. तथाच कार्यस्य कारणीयांशजन्यत्वाद् अंशांशिनोः भेदे अभ्युपगते **कार्यकारणयोः** भेदोऽपि अर्थादेव सिद्धइति भेददूषणं व्यर्थमेव इति अर्थः. तत् निषेधन्ति **न** इत्यादि. **तथाच** इति, कारणगुणानां कार्यगुणारम्भकत्वात् तथाच तदभावात् न भेदः इति अर्थः. ननु अयं न नियमो यत् – कारणगुणैः सर्वैरेव कार्ये गुणाः आरम्भणीयाः – इति, अतः कारणगुरुत्वस्य गुरुत्वान्तरानारम्भकत्वात् न कार्ये द्विगुणं गुरुत्वम्, अतः तदभावो न अभेदसाधकः इत्यतः आहुः **नवा** इत्यादि **एकमेव** इत्यन्तम्. **तथाच** इति, प्रतीतेः प्रामाण्याङ्गीकारेऽपि. तथाच इति, प्रतीतिबलादपि. तथाच सज्जगतोः धर्मभेदकृतैव भेदप्रतीतिः न स्वरूपभेदकृता; अतः प्रतीतिबलेनापि विचारे **सद् एकमेव** इति अर्थः.

ननु अंशानां भेदस्य उपगतत्वात् कुतो न स्वरूपभेदकृता ? इत्यतः आहुः नच इत्यादि. तथाच **अंशांशिनोः** स्वरूपभेदे सति तयोः गुरुत्वस्य भिन्नत्वाद् – अंशे अंशिनो अंशिनि च अंशस्य प्रत्ययेन सत्वाद् – गुरुत्वारम्भाभावेऽपि स्वरूपगुरुत्वादेव **द्विगुणभारापत्तिः**. अतः तयोरपि न स्वरूपभेदाद् भेदः किन्तु अल्पत्व/महत्वादि–धर्मभेदादेव भेद–इति, तदुभयमपि स्वरूपतः एकमेव इति अर्थः. अतएव सुवर्णजिघृक्षुः तच्छकलमपि गृह्णाति इति युज्यते.

(तत्र भास्करीयभेदाभेदवादस्य विमर्शः)

एवं स्वरूपतः सर्वस्य सदात्मकत्वे साधितेऽपि अंशानां परस्परं भेददर्शनेन पुनः प्रत्यवस्थानाभावाय भेदस्वरूपं निश्चेतुं विकल्पयन्ति –

**अंशानाम् इव परस्परं भेदो नाम नानात्वं चेत् ?**

**ओम् ! इति केचित्, ''बहुस्याम्...'' (छा.उ.६।२।३) इति श्रुतेः.**

**वस्तुतस्तु ''पूर्णात् पूर्णमुदच्यते'' (ई.उ.–बृ.उ.: शान्तिपाठः) इति श्रुतेः न अंशेन नानात्वम्. कार्यावस्थायां व्यापकत्वस्य तिरोभावएव.**

**अंशानाम्** इत्यादि. **केचिद्** इति भास्कराचार्याः.

ततोऽपि कञ्चिद् विशेषम् आहुः **वस्तुतः** इत्यादि उदच्यते इति उद्गच्छति. '''अञ्चु' गतिपूजनयोः(धा.पा.:भ्वा.ग.१८८)-'अचु' इति एके'' इति धातुपाठात्. तथाच अत्र श्रुतौ उद्गमनेपि पूर्णत्वश्रावणात् **न अंशेन** कृतं नानात्वं किन्तु ''बहु स्याम्'' (छा.उ.६।२।३) इति इच्छया **कार्यावस्थायां** व्यापकत्वे तिरोभाविते नानात्वम् उद्गतं भवति, भगवतः सर्वत्र सर्वरूपत्वात्. अन्यथा असत्कार्यवादापत्तेः. तद्दूषणन्तु विद्वन्मण्डनटीकायाम् आविर्भावतिरोभाववादे प्रपञ्चितं मयेति न अत्र उच्यते. तस्मात् न आगन्तुकं नानात्वं किन्तु एकत्वाविरोधि, तच्च इच्छया प्रकटीभवतीति न स्वरूपैकत्वबाधकम्. नच युक्तिविरोधाद् अयुक्तत्वं शङ्क्यं, तद्विरोधस्य अत्र भूषणत्वात्, ''तदेजति तन्नैजति'' (ई.उ.५) ''आसीनो दूरं व्रजति शयानो याति सर्वतः'' (क.उ.२।२१) इत्यादिश्रुतिसिद्धत्वात्, ''नहि विरोध उभयं भगवति'' (भाग.६।९।३६) इत्यादिस्मृतिसिद्धात्वात् च. तस्माद् एकत्वाविरोधि श्रौतं नानात्वं न भेदः इति अर्थः.

(तत्र अन्योन्याभावात्मको भेदः इति पक्षस्य निरासः)

''तर्हि अन्योन्याभावएव भेदो अस्तु!''इति विकल्पम् अनुवदन्ति -

**अथ अन्योन्याभावः. सच ''प्रतियोगितावच्छेदकारोपापवाद''-लक्षणः. तथाच ''घटत्वं पटत्वं च एकत्र नास्ति'' इति उक्तं भवति.**

**न एतत् सारं, सति द्रव्ये पार्थिवे च, द्वयोः विद्यमानत्वात्. सर्वगुणप्रसिद्ध्यै तथा प्रकटस्य धर्मवैलक्षण्यनिबन्धना प्रतीतिः. श्रुतिस्मृतिविद्वत्प्रतीत्या वस्तुनः एकत्वे सिद्धे प्रतीतिः तन्निबन्धनैव.**

**अथ** इत्यादि. [१]*इदं प्राचां लक्षणं, नव्यास्तु - ''तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताको अभावः'' इति आहुः. तत्र तादात्म्यं यदि भेदसहिष्णुः अभेदः तदा घटादिषु तादृशाभेदसम्बन्धस्य अभावाद् लक्षणे असम्भवदोषः; तथा भेदस्य तत्र प्रवेशेन ज्ञप्तौ आत्माश्रयदोषः च. अतः ''सच असौ आत्मा तदात्मा, तस्य भावः तादात्म्यम्'' इत्येव वाच्यं, तथा सति स्वरूपसम्बन्धाद् अनतिरेकः. ततश्च प्रतियोगितावच्छेदकारोपापवादएव पर्यवस्यतीति तथा उक्तम्.



एवं तद् अनूद्य* [तद्!] दूषयन्ति **न एतत् सारम्** इत्यादि. **द्वयोः** इति विरुद्धयोः धर्मयोः. नच *घटस्वरूपं पटस्वरूपं न भवतीति ''स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकाभाववत्त्वम्''-एव तल्लक्षणम् अस्तु इति* वाच्यं, सर्वस्य सद्रूपत्वेन सदात्मकत्वेन च तत्सम्बन्धावच्छिन्न- प्रतियोगितायाः वक्तुम् अशक्यतया तल्लक्षणकस्य तत्स्वरूपस्यैव असिद्धेः. नच अभावएव सद्भिन्नः इति वाच्यं, तथा सति ''घटाभावोऽस्ति''-''घटभेदोऽस्ति'' इत्यादि प्रतीतिबाधापत्तेः. नच व्यवहारे तस्याः भ्रमत्वं शङ्क्यं, व्यावहारिकदोषाजन्यत्वात्. तर्हि कुतः इयं भेदप्रतीतिः ? इति आकाङ्क्षायां तद्धेतुम् आहुः **सर्व...** इत्यादि. **तथा प्रकटस्य** इति, तेन-तेन रूपेण प्रकटस्य. ननु धर्मवैलक्षण्यनिबन्धनैव इयं प्रतीतिः न अन्योन्याभावनिबन्धना इत्यत्र किं गमकम् अतः आहुः **श्रुति...** इत्यादि, ''सदेव सोम्येदम्'' (छा.उ.६।२।१) ''सन्मूलाः सौम्येमाः प्रजाः'' (छा.उ.६।८।४) ''पुरुष एवेदं सर्वम्'' (ऋक्.सं.१०।९०।२, श्वेता.उ.३।१५) इत्यादिश्रुत्या, ''भूतानि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च, नद्यः समुद्राश्च सएव विष्णुर्यदस्ति यन्नास्ति च विप्रवर्य!'' (वि.पु.२।१२।३८) ''विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया'' (भाग.३।१०।१२) इत्यादिस्मृत्या, वामदेव-शुकादीनां सर्वत्र एकरूपत्वप्रतीत्या च, वस्तुनः एकत्वे सिद्धे, या अन्येषाम् अभ्रान्ता भेदप्रतीतिः सा धर्मवैलक्षण्यनिबन्धनैव. श्रुत्यादौ वस्त्वैक्यस्य वैलक्षण्यस्य च बोधनात् तदेव नियामकम् इति अर्थः.

१. इतः आरभ्य *....* चिह्नांकितो भागो जूनागढ़पाठे नोपलभ्यते.

अत्र पुनः शङ्कते -

**तर्हि धर्माः स्वतो धर्मिणः च भिन्नाः इति सिद्धम्! न एतदपि अस्ति, तस्यैव प्रथमं धर्मरूपेण आविर्भावात् - नटस्य इव नानारूपेण प्रकटस्य रूपद्वये भेदप्रतीतिवत् - ...न अब्रह्मैव अर्थः प्रतीयते.**

**अतः कृतापि जिज्ञासा कुण्ठितैव भवेद् ध्रुवम्।।३०।।**

तर्हि इत्यादि. सिद्धम् इति, तैरेव प्रमाणैः सिद्धम्. तथाच वृथैव अयं भेददूषणणाडम्बरः इति अर्थः.

तद् दूषयन्ति न एतद् इत्यादि, ''सोऽकामयत...स तपोऽतप्यत'' (तै.उ.३।२।६) इत्याद्युत्तरं स्वबहुभवनस्य उक्तत्वात् स्वयमेव धर्मरूपेण आविर्भवतीति धर्माः न धर्मिणः सकाशाद् भिन्नाः; नापि स्वतो भिन्नाः, [1]* स्वरूपैकस्य उपपादितत्वात्. किन्तु भगवतएव तथा प्राकट्येन परस्परविलक्षणत्वाद् नटरूपवद् भिन्नाः* प्रतीयन्ते. अतो न भेददूषणं व्यर्थम् इति अर्थः.

अत्र यद्यपि एतावतैव निर्वाहो भवति, तथापि उपसंहारे ''मायावादो निराकृतः''(पत्रा.कारि.:३४) इति कथनाद् अत्रच 'प्रथम'पदाद् इतो अग्रे एतावती त्रुटिरिति प्रतिभाति –

''प्रथमं धर्मरूपेण आविर्भावाद्'' इति उक्ते प्राथम्यस्य कालकृतत्वात् तेन भेदम् आपादयेत्. ततः तन्निरासाय ''सदेव सौम्येदमग्र आसीद्'' (छा.उ.६।२।१) इत्यत्र उक्तस्य कालस्य बोधनार्थत्वप्रतिपादनेन भिन्नतानिराक

---

१. इतः आरभ्य*...* चिह्नांकितो भागो जूनागढ़पाठे नोपलभ्यते.

रणं, तत्प्रसङ्गेन 'एक'पदस्य मुख्यार्थतानिराकरणम्. ततः ''अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्, आद्यं त्रयं ब्रह्मरूपम् द्वयं मायिकमुच्यते'' (सि.ले.सं.२।१।७) इति मतं जगतो अब्रह्मत्वाय उपक्षिप्य, तयोः मायिकत्वनिराकरणम् इति.

एवं भेदवादे मायावादे च निराकृते तदग्रे अयं ग्रन्थः **न अब्रह्मैव अर्थः प्रतीयते इति.** एवं प्रपञ्चस्य ब्रह्मभिन्नत्वे मायिकत्वे च निराकृते सति अब्रह्मैव अर्थः प्रतीयते इति न.

तथाच लोकनिपुणाः मायावादिनः च एवं मानयितुं शक्याः. अतो अर्धजरतीयन्यायाद् वैदिकानां वेदान्तत्वप्रसिद्धिः नतु भवदुक्तप्रकारकाद् एकवाक्यत्वाद् इति अर्थः. तेन सिद्धम् आहुः अतः इत्यादि. यतो भवदुक्तरीत्या वेदवेदान्तयोः एकवाक्यतायाः वक्तुम् अशक्यतया वेदान्तेषु वेदत्वस्य असिद्धत्वाद् जैमिनिकृता धर्मजिज्ञासा वेदान्तान् असङ्गृह्णाना तदंशे ध्रुवं निश्चयेन कुण्ठितैव भवेत्, स्वाध्यायाध्ययनविधिना तदध्ययनस्य अप्राप्तेः. ततश्च वैदिकाभिध्यानेन कृतमपि तेषां वेदत्वसमर्थनं वृथैव इति अर्थः।।३०।।



ननु वेदान्तानाम् अनारभ्याधीतत्वाद् तदुक्ताः आत्मज्ञानादयो धर्माः गार्ह्यस्मार्ताः इवेति स्मृतिपादे स्मृतिविचारेणैव तेऽपि विचारिताएवेति न धर्मजिज्ञासायाः कुण्ठितत्वम् इत्येवं समर्थने तदपि दूषयन्ति –

**अनारभ्याधीतगार्ह्यस्मार्ता इव भवेद् यदि।**
**प्रक्रिया महतां वृत्तिः स्वातन्त्र्यं चात्र तेन न।।३१।।**
**धर्मार्थकाममोक्षाख्यं श्रेयः स्मार्तं न वैदिकम्।**
**पुरुषेक्षावशेनैते साध्यसाधनतां गताः।।३२।।**
**अलौकिको हि वेदार्थः प्रमाणान्तरगो नहि।**
**परमात्मविचारेण ते चत्वारो ह्यलौकिकाः।।३३।।**
**धर्मे ब्रह्मणि च प्रोक्ताः फलत्वेन तथैव ते।**

**अनारभ्य** इत्यादि, वेदान्ताः अनारभ्याधीताः गार्ह्यस्मार्ताः इव यदि भवेयुः, तदा **महतां** गृह्यकृतां स्मृतिकृतां च या **प्रक्रिया** प्रकारः वृत्तिः वर्तनं व्यवहारः सच तथा भवेत् तेषां **स्वातन्त्र्यं** वेदभिन्नत्वं च भवेत्. गृह्यकाराः यत्र धर्मान् विचारयन्ति तत्र ''अथ कर्माण्याचारादीनि गृह्यन्ते'' (आप.गृ.सू.१।१।१) ''अथ गार्ह्याणि वक्ष्यामः'' ( ) ''अथातो गृह्यस्थालीपाकानां कर्म'' ( ) इत्येवं प्रतिज्ञाय तत्तत्कर्मकालादिकं वदन्ति. स्मृतिकाराश्च यत्र वदन्ति तत्र महतीषु स्मृतिषु ''अथातः सामयिकाचार्यकान् धर्मान् व्याख्यास्यामः'' ( ) ''योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्'' (याज्ञ.स्मृ.१।१।१) ''अथातो हिमशैलाग्रे देवदानवसंकुले[1] व्यासमेकाग्रमासीनम्'' ( ) इत्येवं धर्मकथनं प्रतिज्ञाय स्थानविशेषे तत्तत्प्रश्नेन वदन्ति इति प्रकारो दृश्यते, 'अमुकगृह्यसूत्रम्'–'अमुकस्मृतिः' इति कर्तृनामपूर्वको व्यवहारः च दृश्यते, तेषां वेदभिन्नत्वं च दृश्यते, तत् सर्वं वेदान्तेष्वपि भवेत्. येन तत् न वेदान्तेषु दृश्यते, तेन एते गार्ह्यस्मार्ताः इव न. तथाच स्मृतिविचारेण तद्विचारसिद्ध्यभावाद् जिज्ञासाकौण्ठ्यं दुर्वारमेव इति अर्थः. कासुचित् स्मृतिषु प्रकारादर्शनात्, ''यद्वै किञ्च मनुरवदत् तद् भेषजम्'' (तै.सं.२।२।१०।२) इति श्रुतावपि मन्वादरदर्शनात् च. प्रकारादिः अप्रयोजकः इति आशङ्कायां युक्त्यन्तरम् आहुः **धर्म...** इत्यादि. प्रकारादर्शनेऽपि क्वचिद्

आदरेऽपि **स्मार्तं** धर्मादिकं **श्रेयो वैदिकं न.** तत्र हेतुः – 'जीवविचारितत्वम्'. यतः एते स्मार्ताः धर्मादयः **पुरुषेक्षावशेन** पुरुषाणां ऋषीणां स्मरणपूर्वक-विचारवशेन **साध्यसाधनभावं** प्राप्ताः, अतः प्रकाराभावेऽपि श्रुतौ क्वचिद् आदरेऽपि न सर्वे वैदिकाः. वेदान्तानान्तु अपौरुषेयत्वात् तदुक्तो **वेदार्थः** स हि!यतो हेतोः **अलौकिकः** अतो हेतोः **प्रमाणान्तरगो** योगादिप्रमाणगम्यो न . अतः तद्विचारस्य आवश्यकत्वेऽपि यस्मात् न विचारः तस्मात् सा तदंशे कुण्ठितैव इति अर्थः.

ननु फलंहि यज्ञैः वेदे प्रतिपाद्यते वेदान्तेषु तु यज्ञाप्रतिपादनात् फलाभावेन तेषां वेदोषरत्वम्. अतः किं तद्विचारेण इत्यतः तदविचारेऽपि न धर्माजिज्ञासायाः कुण्ठितत्वम्! अतः आहुः **परमात्म...** इत्यादि, **धर्मे**

---

१. ''देवदारुवनाश्रमे''इति पाठभेदेन,बृह.परा.संहि.१।२.

ब्रह्मणि च इति धर्मकाण्डे ब्रह्मकाण्डे च।।३१-३३।।

तत्र काण्डद्वयस्थाः श्रुतीः दर्शयन्ति –

**(१)''विराजमभिसम्पद्यते''** **(तै.सं.७।१।१।१)**

**(२)''वसीयान् भवति''(तै.सं.३।१।७।४)**

**(३)''कामुका एनं स्त्रियो भवन्ति''(तै.सं.६।१।६।६)**

**(४)''प्रजापतेरेव सायुज्यमुपैति''(श.ब्रा.१२।१।३।२).**

**(५)''न स पुनरावर्तते''(छा.उ.८।१५।१)**

**(६)''य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति. प्रजया पशुभिर्ब्रह्मवर्च सेन''(तै.उ.३।६) इत्यादि.**

'विराजम्' इत्यादि. अत्र **''विराजम्...''**इत्यादयः पूर्वकाण्डस्थाः. **''न स पुनरावर्तते''** इति छान्दोग्योपनिषत्स्थम्. **''य एवं वेद प्रतितिष्ठति''** इति भृगूपनिषत्स्थम्. तथाच पूर्वकाण्डवद् उत्तरकाण्डेऽपि चतुर्णां फलानां श्रावणाद् ऊषरत्वम् असङ्गतम् इति मीमांसकमते धर्मजिज्ञासाकौण्ठ्यम् अपरिहार्यमेव इति अर्थः. एवम् अत्र जिज्ञासायाः कुण्ठितत्वसाधने धर्मो न सर्वस्य वेदस्य अर्थः किन्तु



पूर्वकाण्डस्यैव अर्थः इति सिध्यति. तथा सति वेदान्तेषु वेदत्वम्[१] अपौरुषेयशब्दत्वाद् वा परमात्मवाक्यत्वाद् वा वक्तव्यं, तदापि एकार्थत्वाभावाद् विभागे साकाङ्क्षत्वाभावात् च तयोः एकवाक्यत्वाभावेन भिन्नशास्त्रत्वमेवेति कथं द्वयोः एकवाक्यत्वम् इति तान् प्रति आक्षेपः पर्यवस्यति. तत्र यदि ''प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते, एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता'' इति सायणीये ऐतरेयब्राह्मण(ऐत.ब्रा.१।१)भाष्ये सम्मतित्वेन उपन्यस्तात् श्लोकात् प्रत्यक्षाद्यगम्य-श्रेयःसाधनस्यैव सर्ववेदार्थत्वम् उपगम्यते, तदापि ''अथातो अलौकिकोपायजिज्ञासा'' इति अकथनाद् जिज्ञाज्ञायाः कुण्ठितत्वं दुर्वारमेव इति सिध्यति.

---

१. वेदत्व पूर्वत्वम् इति गो. पाठः

(वेदाध्ययनं ब्रह्मचर्ये वेदान्ताध्ययनं संन्यासे इति पक्षस्य विमर्शः)

तत्र व्यवहारे भट्टनयम् अङ्गीकुर्वन् मायावादी वा जैमिनिप्रणीत[?]सङ्कर्षणकाण्डाभिमानी वा कुण्ठतां समाधत्ते तद् अनुवदन्ति –

**अथ वेदाध्ययनं ब्रह्मचर्ये वेदान्ताध्ययनं च संन्यास-इति तद्विचारः पृथगेव.**

**समाप्तिश्च श्रूयते शिक्षायां ''वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति'' (तै.उ.१।११।१) इत्यादिना. उपनिषद् अनन्तरं पठिता. आचार्यान्तरेऽपि गुणोपसंहारन्यायेन पूर्वकाण्डाध्ययनमेव ब्रह्मचर्ये, न उत्तरकाण्डस्य. सौकर्यार्थमेव पाठान्तरम् इदानीम्. विचारस्तु पश्चादेवेति न एकवाक्यता. अतएव विचारोऽपि पृथगेव. ''साङ्गोपनिषदः'' ( ) इति पृथक् पुराणेषु निर्देशः इति.**

**अथवा कुत्रापि आश्रमे विचारः अस्तु, न एकवाक्यता, न वेदत्वम् उपनिषदां – स्वरादिनियमः तदन्तानामपि आचारपरम्परया – वाक्येनतु उपयोगः ''यदेव विद्यया करोति'' (छा.उ.१।१।१०) इति. तथापि कथम् उपयोगः ?**

**इति चेद्, उच्यते – लौकिकेषु पदार्थेषु साङ्गो यज्ञो अध्यस्यते, वैदिके तत्र अर्थे वैदिकता सम्पद्यतइति; ब्रह्मवादेन सर्वस्यापि ब्रह्मत्वे अवगते ब्रह्मण्येव यज्ञः प्रतिष्ठितोऽपि भवति. अयज्ञकालेऽपि वैदिकत्वं सिध्यति. ननु वेदान्तत्वं कथम् ?**

**अथ** इत्यादि. न अत्र वेदान्तार्थविचाराभावेन कुण्ठता, **वेदाध्ययनस्य** उपनयनानन्तरं अध्ययनादिविधिना प्राप्तत्वात्; तस्य च अर्थज्ञानार्थत्वाद् अर्थज्ञानस्य च विचारमन्तरेण असम्भवात्. तत्र विचारः पूर्वकाण्डस्यैव अध्ययनादिविधिना आक्षिप्यतइति तदर्थस्य धर्मस्यैव अत्र जिज्ञासा प्रतिज्ञाता न वेदान्तार्थस्यापि. **वेदान्ताध्ययनंतु** तैत्तिरीये भार्गव्यां विद्यायां ''भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति, तस्मा एतत्प्रोवाच'' (तै.उ.३।१) इति, छान्दोग्ये ''अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामि'' (छा.उ.७।१।१) इति अध्यापनाध्ययनलिङ्गात् **संन्यास–इति,** पूर्वं तदधिकाराभावात् पश्चात् मुमुक्षुत्वादि–साधनचतुष्टय–सम्पत्तिरूपे वा; सङ्कर्षणकाण्डोक्ते अन्यस्मिन् वा, अधिकारे सम्पन्ने, तदर्थं व्यासेन जैमिनिना **च तद्विचारः पृथगेव** कृतः–इति विषयभेदात् न धर्मजिज्ञासायाः कुण्ठता; नापि पृथग्विचाराद् एकवाक्यत्वस्य वेदत्वस्य वा हानिः. ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण यज्ञेन तपसा श्रद्धयाऽनाशकेन'' (बृ.उ.४।४।२२) इति वाक्येन वेदानां वेदान्तशेषतया एकवाक्यत्वस्य, वेदान्तेषु च मन्त्रब्राह्मणात्मकत्वेन वा अपौरुषेयशब्दत्वेन वा परमात्मवाक्यत्वेन वा वेदत्वस्य च सत्त्वाद् इति अर्थः.

एवं मतान्तरेण प्रतिज्ञान्तरम् आलम्ब्य दोषे परिहृते तन्मतीयम् एकवाक्यत्वप्रकारं दूषयितुं पूर्वोक्तं स्मारयन्ति **समाप्तिश्च** इत्यादि. **अनन्तरं पठिता** इति, ''एतदनुशासनम्...'' उक्त्वा समाप्तौ ''सैषा वेदोपनिषद्'' (तै.उ.१।११।४) इति वाक्येन पठिता. तथाच यदि भवदुक्तरीत्या एकवाक्यत्वम् अभिप्रेतं स्याद्, वेदसमाप्तिम् अनन्तरभागस्य उपनिषत्त्वं च न वदेद्, अतो न तथा एकवाक्यत्वम् इति अर्थः.

ननु *शिक्षायां ''वेदमनूच्य'' (तै.उ.१।११।१) इति 'क्त्वा' प्रत्ययेन वेदाध्यापनोपनिषदध्यापनयोः एककर्तृकता वेदाध्यापनस्य पूर्वकालिकता च लभ्यते, 'क्त्वः' तत्रैव अनुशासनात्, नतु शास्त्रसमाप्तिरपि. अतो यत्र एकाचार्यकता, तत्र उपनिषदां पश्चात् पाठो अर्थप्राप्तो[१] अनूद्यत–इति न तयोः शास्त्रभेदकत्वम्,



आचार्यान्तरेण तत्पाठने तदभावात्. अतः* कथम् एकवाक्यत्वाभावः ? इत्यतः आहुः आचार्यान्तरेऽपि इत्यादि,

---

१. 'अर्धप्राप्तो' इति गो. पाठः.

आचार्यान्तरे यद् अध्ययनम् आपाद्यते, तत् किं–

(१)ब्रह्मचर्ये उत (२)संन्यासे ?

(१)तत्र यदि आद्यः पक्षः, तदातु **गुणोपसंहारन्यायेन पूर्वकाण्डाध्ययनमेव ब्रह्मचर्ये,** ब्रह्मचर्ये विहितं यत्, पूर्वकाण्डाध्ययनं ब्रह्मचारिणः तदध्यापनं वा, तद्गुणभूतस्य आचार्यान्तरस्य समानविषयएव अध्ययने अध्यापने च! उपसंहारप्राप्तेः, ''उपसंहारोऽर्थाभेदात्'' (ब्र.सू.३।३।५) इति सूत्रे तथैव सिद्धत्वात् **– न उत्तरकाण्डस्य,** समानविषयत्वाभावात्. अतः आचार्यान्तरेऽपि तदध्ययनानन्तरं ''वेदमधीत्य स्नायात्'' (द्र.:म.स्मृ.३।२–४) इति समावर्तनस्य[१] प्राप्तेः न तस्य शास्त्रसमाप्तिबाधकत्वं नवा उपनिषदानन्तर्यबाधकत्वम्. अतः शास्त्रभेदो निराबाधः.

(२)अथ संन्यासे, तदातु तन्मते केवलज्ञानस्यैव मोक्षहेतुत्वाङ्गीकाराद् ''...विविदिषन्ति'' (बृ.उ.४।४।२२) इति श्रुत्या विविदिषायामेव वेदोक्तसाधनानाम् उपक्षयाङ्गीकारेण ज्ञानशेषतायाअपि वेदेषु अभावात् न तथापि एकवाक्यत्वम्. इच्छायाः अपुरुषार्थत्वे वेदानां अपुरुषार्थपर्यवसायित्वं वेदप्रयोगाभावापत्तिः चेति अधिकं दोषद्वयम् इति अर्थः.

ननु यदि न एकवाक्यत्वं, तदा इदानीं कुतः एकस्माद् आचार्याद् आचार्यान्तराद् वा ब्रह्मचर्यएव पठन्ति, तदैव शिष्टाः पाठयन्ति च इत्यतः आहुः **सौकर्य...** इत्यादि. **पश्चादेव** इति साधनचतुष्टयसम्पत्त्यानन्तर्यादिः भवद्भिः अ ीकारात् तथा इति अर्थः. ननु तर्हि ''विचारपश्चात्त्वम् अधिकारभेदकृतं न शास्त्रभेदकृतम्'' इति यद् उक्तं, तदपि आद्रियताम् इत्यतः आहुः **अतएव** इत्यादि, **अतएव** इति शास्त्रभेदादेव. तत्र हेतुः **''सा'...''** इत्यादि, तथाच स्वकल्पितयुक्त्यपेक्षया उपबृंहणसिद्धस्य बलिष्ठत्वाद् वाक्यभेदपक्षएव युक्त–इति तत् न आद्रियते इति अर्थः. ननु *तर्हि यन्मते ''आश्रमान्तरेऽपि विचारः''इति अङ्गीक्रियते, अलौकिकोपायवेदकत्वरूपं वेदत्वम् आदाय, तन्मतेन एकवाक्यत्वम् अस्तु ! इति* चेत्, तत्र आहुः अथवा इत्यादि. न वेदत्वम् इत्यादि, तन्मतेऽपि तादृशं वेदत्वं उपनिषदां न. यदि तथा जैमिन्यभिप्रेतं

१. 'प्राप्तेन' इति गो पाठः.

स्यात् तदा जैमिनिः पूर्वं धर्मजिज्ञासां प्रतिज्ञाय तदवान्तरविचारत्वेन ''अथातः शेषलक्षणम्'' (जै.सू.३।१।१) ''अथातः कृत्वर्थपुरुषार्थयोर्जिज्ञासा'' (जै.सू.४।१।१) इति यथा मध्ये उक्तवान्; तथा पूर्वम् 'अथातोऽलौकिकोपायजिज्ञासा' इति प्रतिज्ञाय पश्चादेव तद्विशेषविचारत्वेन धर्मजिज्ञासाम् उपासनाजिज्ञासां च प्रतिजानीयात्. तथातु नास्तीति तादृशोपायविशेषावेदकत्वरूपं वेदत्वं तस्य न अभिप्रेतम् उपनिषदाम्. अतो न तद्रीत्यापि वेदैकवाक्यत्वं वेदान्तानाम् इति अर्थः.

एवं सर्वं तन्मतं दूषयित्वा वैदिकाभिध्यानाद् यत् तेन प्रत्यवस्थितं तस्य शैथिल्येन तदुत्तरस्य पूर्वम् अनुक्तत्वाद् इदानीं तत् स्मृत्वा कदाचित् पुनः प्रत्यवतिष्ठेद् इत्यतः तत्स्वरूपं आहुः **स्वरादि**...इत्यादि. **अपि** गर्हायां – ''मूर्खः प्रत्यवस्थाता!''इति. इदन्तु प्रागेव विवृतमिति न पुनः उच्यते. तथाच तस्य शैथिल्यात् न तेन प्रत्यवस्थानं युक्तम् इति अर्थः. ''यदेव...''(छा.उ.१।१।१०) इति **वाक्योत्तरस्य** पूर्वं सम्यगप्राप्तत्वात् तेन प्रत्यवतिष्ठासन्तं प्रति आहुः **वाक्येन** इत्यादि. अनेन **वाक्येनतु उपयोगमात्रम् उच्यते,** नतु शेषता नियन्तुं शक्यते. तथा सति फलश्रुति–काण्डासमाप्त्योः विरोधापत्तेः इतः प्रागेव उक्तमिति न तेनापि प्रत्यवस्थानावकाशः इति अर्थः. ननु श्राद्धे ज्ञानोपयोगः आन्नत्यार्थः ''ज्ञाननिष्ठाय देयानि कव्यान्यान्नत्यमिच्छता'' (भाग.७।१५।२) इति कथनात्; सोऽपि सम्प्रदानपुरुषद्वारा, अत्रतु वाक्ये कर्ममात्रपौष्कल्यं फलत्वेन उच्यते, तत्र द्वारं चेत् न वक्तुं शक्ष्यन्ति तदा पराजेष्यन्ति(!) इति आशयेन आह तथापि इत्यादि. तत्र उत्तरत्वेन सोपपत्तिकं प्रकारम् आहुः उच्यते इत्यादि. लौकिकैः पदार्थैः यज्ञो न सिध्यतीति गुणकर्मबोधकैः ''व्रीहीन् प्रोक्षति'' (आप.श्रौ.सू.१।१९।१) इत्यादिवाक्यैः **साङ्गो यज्ञो लौकिकेषु पदार्थेषु** आरोप्यते, **वैदिके** कर्मणि तदुपकरणभूतस्य पदार्थस्य मूर्तेः देवतासंनिधानेन देवतात्ववत् **वैदिकता सम्पपद्यते इति** एतदर्थम्. एतत् पूर्वकाण्डे सिद्धम्. उत्तरकाण्डे ''सन्मूलाः सोम्येमाः प्रजाः'' (छा.उ.६।८।४) 'इदं सर्वं यदयमात्मा'' (बृ.उ.२।४।६)इत्यादिवाक्यश्रावितेन **ब्रह्मवादेन सर्वस्य** प्रपञ्चस्य प्रापञ्चिकस्य च वस्तुनो **ब्रह्मत्वे अवगते यज्ञोऽपि** सद्रूपत्वाद् ब्रह्मात्मकएव भवति. किञ्च यजमानस्य अपराभावाय **प्रतिष्ठितोऽपि भवति.** तद् उक्तं तैत्तिरीयसंहितायां



''वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत् सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा यज्ञपताविति स होवाच यज्ञपताविति सत्याद् वै सृञ्जयाः पराबभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद् यजमानस्यापराभावायेति'' (तै.सं.६।६।२।६) इति. किञ्च अयज्ञकालेऽपि पदार्थानां ब्रह्मात्मत्वावगतौ तेषां वैदिकत्वं सिध्यति. तथाच अत्र अपराभा(भ!)वादिफलार्थं ब्रह्मवादेन सर्वस्य ब्रह्मात्मावगतिः द्वारम् इति अर्थः. एवम् उत्तरदानेन वैदिके मते वेदान्तानां पूर्वोक्तार्धजरतीन्यायात् वेदान्तत्वं उपसंहृतं तेन काण्डद्वयस्यापि ''सर्वे वेदा यत्पदमामनन्ति'' (क.उ.१।२।१५) '''ॐ'इत्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्'' (मा.उ.१) इत्यादि श्रुतिभिः, **''वेदैच सर्वैरहमेव वेद्यः''** (भ.गी.१५।१५) ''वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे, परोक्षवादा ऋषयः परोक्षं च मम प्रियम्'' (भाग.११।२१।३५) इत्यादिस्मृतिभिः च ब्रह्मविषयत्वेन, ''फलश्रुतिरियं नृणां न श्रेयोरोचनं परं श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम्.'' (भाग.११।२१।२३) इत्यादिभिः मोक्षैकप्रयोजनत्वेनच एकवाक्यत्वम्, न अन्यथा. तत् चेत् न अङ्गीक्रियते, तदा कथमपि न एकवाक्यत्वमिति तन्मते उत्तरकाण्डस्य वेदान्तत्वं न कथमपि सिध्यतीति तान् पर्यनुयुञ्जते ननु वेदान्तत्वं कथम् इति. कर्ममीमांसक–मायावादिनोः मतम् आलम्ब्य मां पर्यनुयुञ्जानैः उत्तरकाण्डस्य वेदान्तत्वं स्वस्वमतेन समर्थनीयम् इति अर्थः.

(ग्रन्थोपसंहारः)

**तच्च कृष्णप्रसादेन मायावादो निराकृतः।।३४।।**<br>
**आवैदिको महादेवः तत्र साक्षी न संशयः।**<br>
**ये वैदिकाः महात्मानः तेषां चानुमतिस्तथा।।३५।।**<br>
**अवेदविद् न मनुते मया चोपेक्षितः पुनः।**<br>
**स्थापितो ब्रह्मवादो हि सर्ववेदान्तगोचरः।।३६।।**<br>
**काशीपतिस्त्रिलोकेशो महादेवस्तु तुष्यतु।**<br>
**कस्यचित्त्वथ सन्देहः स मां पृच्छतु सर्वथा।।३७।।**<br>
**न भयं तेन कर्तव्यं ब्राह्मणानामियं गतिः।**<br>
**डिण्डिस्तु वादितो द्वारि विश्वेशस्य मयात्र हि।।३८।।**<br>
**विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः।**

।।इति श्रीमद्वल्लभाचार्यविरचितं पत्रावलम्बनं सम्पूर्णम्।।

एवं पर्यनुयुज्य पत्रावलम्बनम् उपसंहरन्ति **तच्च** इत्यादि, **तद् एक**वाक्यतापादकं मीमांसकादिमतं मायावादः **च कृष्णप्रसादेन निराकृतो,** नतु युक्तिमात्रेण, कृष्णप्रसादबीजन्तु अत्र भगवन्मतब्रह्मवादस्थापनम्. ''एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः'' (भाग.११।२९।२३) इति उद्धवं प्रति एकादशे भगवद्वाक्यात्. ब्रह्मवादस्वरूपन्तु ''सर्वे वेदाः यत्पदमामनन्ति'' (क.उ.१।२।१५) ''इदं सर्वं यदयमात्मा'' (बृ.उ.२।४।६) ''वेदैश्च सर्वैरहमेववेद्यः'' (भ.गी.१५।१५) ''वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे'' (भाग.११।२१।३५) ''अहमेवासमेवाग्रे'' (भाग.२।९।३२) इत्यादि श्रुतिस्मृति-प्रतिपादितं बोध्यम्. अत्र मानम् आहुः आवैदिकः इत्यादि, महादेवस्य आसमन्ताद् वैदिकत्वन्तु ''वेदः शिवः शिवो वेदः'' (पु. ) ''वेदाध्यायी सदाशिवः'' (पु. ) इति शिवपुराणवाक्याद् बोध्यम्. **अनुमतिः तथा** इति. 'साक्षिणि' इति शेषः. ननु यत् शब्दार्थविचारेण उक्तं तत् मीमांसकादिभिः वैदिकेः मन्तव्यं नतु नैयायिकाद्यैः, अतो न एतावता निर्वाहः इत्यतः आहुः **अवेदविद्** इति. तथाच ''एतेन शिष्टापरिग्रहाः व्याख्याताः'' (ब्र.सू.२।१।१२) इति सूत्रे तेषां तथात्वबोधनात् ते अप्रयोजका- इति तदनादरेऽपि अक्षतिः इति अर्थः. ननु महादेवादेः साक्षित्वं कुतो हेतोः? इत्यतः आहुः **स्थापितः** इत्यादि, तथाच तोषादेव साक्षित्वं करिष्यति इत्यतः उच्यते इति अर्थः. ननु शिवतोषार्थम् इदं चेद् एवं पत्रावलम्बनस्य किं प्रयोजनम् अतः आहुः **कस्यचिद्** इत्यादि, प्रतिवादिनः सन्देहनिराकरणम् एतत्प्रयोजनम् इति अर्थः. वादे जयपराजयसम्भवात् तत्कृतं भयं न कर्तव्यम् इति अर्थः. तत्र हेतुः **ब्राह्मणानामियं गतिः** इति. पूर्वं याज्ञवल्क्यादिभिः तथैव करणात् तत्र न दोषः इति अर्थः. **डिण्डिस्तु** इति, एतद्वादस्य अप्रच्छन्नत्वाद् इति अर्थः. एवं करणप्रयोजनम् आहुः **विद्वद्भिः** इति, तथाच सन्मार्गरक्षणम् एतत्करणप्रयोजनम् इति अर्थः।।३४-३९।।

**एष पुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे।**
**निवेदितो मया तेन चापलं मे क्षमन्त्विति।।**

**इति श्रीमद्वल्लभाचार्यचरणैकतान-पीताम्बरात्मज-**
**पुरुषोत्तमेन**
**विरचितं पत्रावलम्बनविवरणं सम्पूर्णम्**



**।।श्रीकृष्णाय नमः।।**

# ।।पत्रावलम्बनम्।।

# श्रीमद्विट्ठलेशचरणात्मजश्रीगिरिधराणां

# तत्त्वविवेकः

**श्रीहरिरायमहानुभावानां**

# विवरणम्

**इति व्याख्याद्वयोपेतम्**

**(उपक्रमः)**

**लौकिको वैदिकश्चैव व्यवहारो द्विधा मतः।**
**लोकसिद्धं पुरस्कृत्य वैदिको बोध्यते यथा।।१।।**

---

तत्त्वविवेकः

तं नत्वा वल्लभाधीशं तथा श्रीविट्ठलं प्रभुम्।
पत्रावलम्बनव्याख्यां कुर्वे विद्वन्मनोरमाम्।।१।।
जयन्ति यत्पद-द्वन्द्व-नख-चन्द्र-मरीचयः।
पापध्वान्तविनिर्ध्वंसात् सत्प्रकाशपटीयसः।।२।।
तं वेद्यं परमं कृष्णं परं ब्रह्म जगद्गुरुम्।
नत्वा विविच्यते श्रीमद्गूढपत्रावलम्बनम्।।३।।
तं नत्वा परमानन्दं श्रीकृष्णास्यं जगद्गुरुम्।
विविच्यते निगूढार्थं मया पत्रावलम्बनम्।।४।।

अत्र तावत् प्रथमं स्वयं तं ब्रह्मवादं व्याचिख्यासवः *तत्र '''सर्वं-ब्रह्म' इत्यत्र च वेदसिद्ध-जगत्कर्तृत्वादि-धर्म-पुरस्कारेण ब्रह्मज्ञानं भवति. तत्रच पूर्वकाण्डीयधर्मत्वे[न!] वेदोक्तो दध्यादिरूपः तत्तत्कर्मसाधनीभूतोहि लौकिकपदार्थ-दध्यादि-पुरस्कारेणैव ज्ञातुं शक्यः, वैदिकपदार्थानाम् अलौकिकत्वेन लौकिकचक्षुरयोग्यत्वाद् वैदिकः सर्वोऽपि व्यवहारः लोकसिद्धः''-इति ब्रह्मवादे

व्युत्पिपित्सवः* तत्रच सन्देहनिरसनपूर्वकं प्रथमं लौकिक–व्यवहारोप–निबन्धनम् आहुः **लौकिकः** इति. **लौकिको** अथच

**लोके शब्दार्थसम्बन्धो रूपं तेषां च यादृशम्।**
**न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्।।२।।**

---

तत्त्वविवेकः

**वैदिको व्यवहारो द्विधा** द्विप्रकारकः **मतः** सर्वसम्मतः इति अर्थः. **यथा वैदिको** व्यवहारः तथा **लोकसिद्धं** व्यवहारं **पुरस्कृत्य बोध्यते –** यत्प्रकारको वैदिको व्यवहारः तत्प्रकारको व्यवहारो लोकसिद्धं व्यवहारं पुरस्कृत्य बोध्यते इति अर्थः. वैदिकव्यवहारसदृशो लोकसिद्धो व्यवहारः इत्येतेन ''यएव लौकिकाः पदार्थाः तएव वैदिकाः न भिन्नाः'' इति वदन्तः पूर्वकाण्डा[न!]भिज्ञाः प्रत्युक्ताः.

अथवा **यथा** इत्येतस्य अग्रिमेण सम्बन्धः. तथाच **यथा** यादृशो **लोके शब्दार्थसम्बन्धो** अस्ति; **ये[ते!]षाञ्च यादृशं रूपं च अस्ति तत्र विवादो न कार्यः. तथा**करणेतु = विवादकरणेतु **लोकोच्छित्तिः** भवेद् इति अर्थः. लोके यादृशः शब्दो; अर्थः च यादृशः, तयोः सम्बन्धः तादृशएव वेदे अस्ति. नतु सएव इति अर्थः. ततः कारणाद् वैदिकाः शब्दाः तदर्थाः च, लोकतः भिन्नाएव इति आगतम्, आकृतिमात्रपरिज्ञानार्थं परं लोकापेक्षेति. एतेन ''यएव लौकिकाः तएव वैदिकाः'' इति अभिमन्वानाः निराकृताः. यदिच लौकिकशब्दार्थापेक्षा भवति वैदिकशब्दार्थयोः, तदातु लौकिकशब्दार्थापेक्षकौ वैदिकशब्दार्थौ जातौ, तर्हि **लोकोच्छित्तिः** स्यात्, सर्वोऽपि व्यवहारो वेदसिद्ध–इति. सर्वस्यैव वैदिकव्यवहारस्य वैसादृश्ये, लोकव्यवहारे वेदस्य अनुपयुक्तत्वेन मर्यादारूपश्च लौकिकव्यवहारो अहिंसा–सत्यवचनादि–रूपः स उच्छिद्येत. वेदेच 'अहिंसा'शब्दोऽपि अन्यो अर्थोऽपि अन्यएव चेत्, तदा विपर्ययोऽपि

विवरणम्

अथ अस्मदाचार्यवर्याः सकलासुर–सूरिसमूह–मुखध्वंसं विधातुं पूर्वपक्षग्रन्थं पत्रावलम्बनाय निरूपयन्ति लौकिकः इति. द्विविधो हि – **व्यवहारो लौकिको वैदिकः** च – 'घटा'दिशब्दैः 'वेदि'–'यूप'–'उपला'दिशब्दैः च दृश्यते. **सं[!]मतः**



सर्ववादिसम्मतः इति अर्थः. तदनुपपत्तिं निरूपयन्ति **लोकसिद्धम्** इति. **लोकसिद्धं** भूम्यादिपदार्थं **पुरस्कृत्य** स्फूर्तिविषयत्वेन

**ब्रह्मवादे निरुक्तिस्तु न वक्तव्यैव कुत्रचित्।**
**वस्तुतो ब्रह्म सर्वं हि व्यवहारस्तु लोकतः।।३।।**

---

तत्त्वविवेकः

स्याद् – वेदोदिताद् अन्यथापि कुर्यात्. अतः सर्वोऽपि लोकव्यवहारो विपर्यस्तएव भवेत्, निषेधस्य भिन्नविषयत्वात्. ततश्च लोकव्यवहारः उच्छिद्येत इति. तस्मात् सादृश्यं लौकिकवैदिकशब्दार्थयोः इत्येव समधिगन्तव्यम्. यदिच तत्सादृश्यं तदातु वैदिकविधिनिषेधौ लोकेऽपि फलतः.।।१–२।।

**ब्रह्मवादे निरुक्तिस्तु** इति, ब्रह्मणो वदनं= ब्रह्मवादः – ''सर्वं–ब्रह्म'' वा इत्याकारकं कथनं, तस्मिन्. **कुत्रचित्** कस्मिन्नपि पदार्थे निरुक्तिः **न वक्तव्या,** यथा, ''गन्धवती पृथिवी''(त.सं.:द्र.ल.प्र.)इति निरूपणम्.

विवरणम्

अग्रे उपस्थाप्य तत्रैव शब्दविशेषैः **वैदिको** व्यवहारो 'वेदि'–'यूपा'दिशब्दैः बोध्यते. न पदार्थाः भिन्नाः वैदिकाः–इति 'घट'–'कलशा'–दिशब्दैः लोके एकपदार्थे विचित्रव्यवहारवद् वैदिकोऽपीति लौकिकपदार्थमात्रसिद्ध्या तत्परस्य प्रकारान्तरेऽपि न भेदइति लौकिकमात्रव्यवहारसिद्धिः इति अर्थः.

ननु – वेद्पुरस्कारेणैव लौकिकपदार्थनिर्वचनं विधेयमिति स्यात् सर्वत्र वैदिकव्यवहारमात्रसिद्धिः – इति चेत् तत्र आहुः **यथा लोके**इति, **लोके यथा** येन प्रकारेण येषां **शब्दा**नाम् **अर्थानां** यः सम्बन्धो यत् च रूपं वा आनुपूर्वी कम्बुग्रीवादिमत्त्वं च **तत्र** शब्दे अर्थे आनुपूर्व्याम् आकारे च, प्रत्यक्षसिद्धत्वात्, **न विवादः कार्यः**, प्रत्यक्षसिद्धस्य अपलाल!पितुम् अशक्यत्वात्. कदाचिद् वेदएव निरूपितातीन्द्रियपदार्थे तत्सम्भवो नतु लोके इति अर्थः. ननु तथाकथने किं बाधकम्? इति चेत् तत्र आहुः **लोकोच्छित्तिःइति. तथा** तेन प्रकारेण वेदपुरस्कारेण लोकनिरूपणप्रकारेण तन्निरूपणे लोकोच्छेदः स्याद्, एकेनैव चारितार्थ्याद् इति अर्थः।।१–२।।

ननु-निरुक्त्यैव शब्दानाम् अर्थव्यवहारो भविष्यति किं लोकसङ्केतेनेति वैदिकव्यवहारएव अस्तु!-इति चेत्, तत्र आहुः **ब्रह्मवादे निरुक्तिः** इति, ''**सर्वं-** ब्रह्म'' इति वादे ब्रह्मणएव सर्वशब्दवाच्यत्वं, सर्वभावेन आविर्भावात्. अतएव ''वह्निः-अनुष्णः'' इत्यादिवाक्यानामपि योग्यत्वं, यतः सर्वं व्यवहारएव अन्यथा प्रतीयते. **वस्तुतः** तु **ब्रह्म** एव. अतो

**ये धातुशब्दाः यत्रार्थे उपदेशे प्रकीर्तिताः।**

**तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्॥४॥**

---

तत्त्वविवेकः

अत्र हेतुः **वस्तुतो ब्रह्म सर्वं हि** इति, वस्तुगत्या ब्रह्म यत्तत्सर्वरूपं भवति. हि इति युक्तश्च अयम् अर्थः. ''ब्रह्मवादे निरुक्तिः न वक्तव्या'' इति युक्तश्च अयम् अर्थः. युक्तत्वमेव उपपादयन्ति **वस्तुतो ब्रह्म सर्वं हि** इति, हेतुत्वेन अनवभास्यमपि अर्थतो गर्भहेतुरयं [हेतुगर्भितं वचनमिदं!] बोध्यम्. **हि** निश्चये वा. सा निरुक्तिः तदा भवति यदा अतिरिक्त-पदार्थ-सद्भावः स्याद्, इतरव्यावृत्त्यर्थं हि निरुक्तिः वक्तव्या, एवंसति! 'घट'पदेन 'मठ'पदेनापि ब्रह्मैव उच्यत-इति, तदतिरिक्तस्य वस्तुनो अभावात्, तदितर-पदार्थाभावेन इतरपदार्थ-व्यावृत्त्यभावात्, निरुक्तेः प्रयोजनाभावात्. ननु ''व्यावृत्तिः व्यवहारो वा लक्षणस्य प्रयोजनम्'' इति उक्ते [सति!] व्यावृत्त्यभावेऽपि व्यवहारार्थं लक्षणं वक्तव्यमेव इत्यतः आहुः व्यवहारस्तु इति. तस्यतु **लोकतएव** उपपत्तेः इति भावः.

**ये धातुशब्दाः** धातुवाचकशब्दाः **उपदेशे** ''उपदेशः आद्योच्चारणम्''- इति धातुपाठे. यत्र अर्थे यस्मिन् अर्थे **प्रकीर्तिताः** कथिताः. **वेदराशेः** सम्पूर्णस्य **तथैव** तेन प्रकारेणैव **अर्थः कर्तव्यः. न अन्यथा** एतदतिरिक्तप्रकारेण क्वचिदपि न कर्तव्यः इति अर्थः॥३-४॥

विवरणम्

ब्रह्मत्वेन व्यवहारे वैदिकशब्दानाम् आनुकूल्यम्. प्रापञ्चिक**व्यवहारस्तु लोकतः** एवेति व्यवहारार्थं तदपेक्षा. अतः तत्पुरस्कारेण वैदिकव्यवहारसिद्धिः. वेदस्यतु ''सर्वे वेदा यत्पदमामनन्ति'' (क.उ.१।२।१५) इति श्रुतेः ब्रह्ममात्रवाचकत्वात्. अतो मुख्यो लौकिकएव व्यवहार-इति व्यवहारद्वयसिद्धिः



इति अर्थः.

लोकपुरस्कारेण वेदार्थव्यवहारनिरूपणे नियमवाक्यमपि आहुः **ये धातुशब्दाः** इति, ये धातवो ये शब्दाः **यत्र** यस्मिन् **अर्थे उपदेशे** पाणिन्यादीनाम् आद्योच्चारणे **प्रकीर्तिताः** सङ्केतविषयीकृत्य कथिताः लोके **तथैव वेदराशेरपि निर्णयः** कार्यो **न अन्यथा क्वचिद**पि इति अर्थः॥३-४॥

(वेदाध्ययनविधिविचारः)

**काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिरुच्यते।**

**वाक्यत्रयं तथा वेदेऽनारभ्याधीतमेव हि॥५॥**

---

तत्त्वविवेकः

तत्र कथं तदर्थज्ञानं भवति इति तस्य आवश्यकत्वबोधनाय स्वाध्यायविधिम् आहुः **काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिः उच्यते,** ''स्वाध्यायोऽध्येतव्यः'' इत्यत्र उच्यते इति. **काण्डद्वयं** कर्मकाण्ड-ज्ञानकाण्ड-द्वयं, तस्य यो अर्थः तत्सिद्ध्यर्थम् इति **अर्थः. कर्मकाण्डस्य** यो अर्थः कर्मरूपः, तस्य **सिद्धिः** ज्ञानं **तदर्थम्** इति अर्थः. एवं ज्ञानकाण्डस्य यो अर्थः ब्रह्मज्ञानस्वरूपः तस्य सिद्धिः प्राप्तिः तदर्थम् इति अर्थः.

अथवा ''यज्ञरूपो हरिः पूर्वकाण्डे ब्रह्मतनुः परे'' (त.दी.नि. १।११) इति कथनात् कर्मकाण्डो ज्ञानकाण्डो=ब्रह्मकाण्डः, **तदर्थः** ब्रह्मस्वरूपः तस्य **सिद्धिः** ज्ञानं **तदर्थम्** इति अर्थः. यद्यपि यज्ञात्मकभगवदर्थः पूर्वकाण्डार्थः ब्रह्मात्मकश्च उत्तरकाण्डार्थः परस्परं भिन्नएव; तथापि यज्ञादेः चित्तशुद्धिद्वारा ब्रह्मज्ञानसाधकत्वएव तात्पर्यात्, पूर्वकाण्डार्थो ब्रह्मरूपएव इति अभिप्रायेण तथा इति भावः, उभयथापि ब्रह्मणः मानरूपत्वात्. कर्मकाण्डब्रह्मकाण्डार्थोऽपि ज्ञानरूपः इति वक्तुं शक्यते तस्य **सिद्धिः** प्राप्तिः इति पूर्वोक्तव्याख्यानमेव सम्यक्. एवञ्च काण्डद्वयार्थसिद्ध्यर्थं ''स्वाध्यायोऽध्येतव्यः'' इति स्वाध्यायविधिः उच्यते इति अर्थः. स्वाध्यायविधिना स्वाध्यायाध्ययने सिद्धे

विवरणम्

व्यवहारपूर्वपक्षम् उक्त्वा अध्ययनविधिपूर्वपक्षम् आहुः काण्डद्वय...इति,

**कर्मकाण्ड**-ज्ञानकाण्ड-द्वयं, तस्य यो अर्थः कर्मज्ञानरूपः, तस्य **सिद्ध्यर्थं** प्राप्त्यर्थं ज्ञानार्थं वा **स्वाध्यायो** वेदः, तस्य अध्ययनविधिः **उच्यते** इति **अर्थः**. अध्ययनविधायकवैदिकवाक्यानि परिसङ्ख्याय तद्विशेषनिरूपणपूर्वकं पूर्वपक्षयति **वाक्यत्रयम्** इति. ''स्वाध्यायोऽध्येतव्यः'' इत्यादितत्त्रयम् इति अर्थः. ननु वाक्यत्रयसत्त्वेऽपि न एकार्थतानिरूपणाग्रहः, कार्यत्रयाणामपि तत्तत्प्रकरणपठितत्वेन तत्तद्विशेषनिरूपकत्वाद् इत्यतः आहुः **अनारभ्याधीतमेव** हि इति,

**एकार्थतातु सर्वत्र विशेषोऽप्युच्यते स्फुटः।**

**''स्वाध्यायोऽध्येतव्यः''(तै.आ.२।१५)**

**(क)''अष्टवर्षं ब्राह्मणमुपनयीत...''( )**

**(ख)''...तमध्यापयीत''( )**

**(ग)''साङ्गो वेदोऽध्येयो ज्ञेयश्च''( )इति.**

---

तत्त्वविवेकः

तदनु तदर्थानुष्ठानेन चित्तशुद्धौ तदनु ब्रह्मज्ञानसिद्धिः इति काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिः उच्यते इति भावः. स्वाध्यायाध्ययनविधिरेव स्वाध्यायविधिः इति अर्थः. विधेः धर्मज्ञानपर्यन्तं ब्रह्मज्ञानपर्यन्तं च व्यापारः इति अर्थः. यथा स्वाध्यायविधिः उच्यते तथा **वाक्यत्रयं वेदे काण्डद्वयार्थसिद्ध्यर्थम्** इति तथा इत्यस्य अर्थः. वाक्यत्रयं तथा वेदे अनारभ्याधीतमेव इति, ''स्वाध्यायोऽध्येतव्यः''[इति वचनवद्!] इदमपि अनारभ्याधीतम् ''अष्टवर्षं ब्राह्मणमुपनयीत''-''तमध्यापयीत''-''साङ्गो वेदोऽध्येयोज्ञेयश्च'' इति. वाक्यत्रयं वेदे अनारभ्याधीतमेव इति, आरभ्य अधीतं नहि भवति, कस्यापि प्रकारेण [कस्मिन्नपि प्रकरणे!] हि न आम्नातम्. हि इति निश्चयेन, कस्यापि प्रकारेण[कस्मिन्नपि प्रकरणे!] किञ्चिद् धर्मादिकं यज्ञादिकं वा आरभ्य अधीतं नहि भवति, पठितं न भवति. यदि चेत् किञ्चिद् आरभ्य कस्यचित् प्रकारेण[प्रकरणे!] इदं वाक्यत्रयं पठितं स्यात् तदा प्रकरणानुरोधेन तादृशएव अर्थः कर्तव्यो भवेत्. पठितं चेत् नास्ति तदातु स्वतन्त्रं जातं तद् वाक्यत्रयम्, अनारभ्याधीतत्वाद् इति. अतः उपनयनादीनां स्वाध्यायविध्यर्थत्वमेव आयाति. अन्यथातु अन्यप्रकारेण यदि आम्नातं स्यात् तदातु उपनयनादीनाम् अन्यार्थत्वं स्यात् न स्वाध्यायविध्यर्थत्वम्. एवञ्च उप-नयनमन्तरेण अध्यापनं न सम्भवति. अध्यापनासम्भवेतु शिष्यस्य अध्ययनासम्भवः



तदभावे च ज्ञानाभावः इति त्रयाणामपि वाक्यानां स्वाध्यायविधिशेषत्वम् उपगन्तव्यम् इति निष्कर्षः.

**एकार्थतातु सर्वत्र** इति, यतः त्रयाणामपि स्वाध्यायविधिशेषत्वम् अतः सर्वत्र वाक्यत्रये, **एकार्थता** स्वाध्यायविध्येकार्थता इति अर्थः. काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिः इत्येतदात्मकैकार्थतातु **सर्वत्र उच्यते** वेदे इति यावत्।।५।।

**'स्वाध्याय'शब्दो वेदे हि रूढो योगेऽपि वर्तते।।६।।**

**सुष्ठ्वासमन्तादध्येयः शोभनं नियमैर्युतः।**

**देशे काले गुरौ स्वस्मिन् अपेक्ष्यन्ते गुणा इह।।७।।**

**'आ' सर्वतः पुनस्तत्र यथा शङ्का न जायते।**

---

तत्त्वविवेकः

विशेषः कः? इत्यतः आहुः **'स्वाध्याय'**...इति. ननु भवन्मते विधिः नास्तीति कथं विध्येकार्थता इत्यतः आहुः **'स्वाध्याय'शब्दो रूढो** भवति वेदे यौगिको **अपि वर्तते** इति, अयमेव **विशेषः स्फुटः** प्रकटः विशेषः **उच्यते 'स्वाध्याय'शब्दो रूढो योगेऽपि वर्तते** इत्याकारकः इति अर्थः.

''स्वाध्यायोऽध्येतव्यः''इत्यत्र विधिःनास्ति, अज्ञातृज्ञापनस्यैव विधेः प्रयोजनत्वेन; प्रकृतेच विधिना यद् बोध्येत 'स्वाध्याय'पदमहिम्नैवच तद् बोध्यत-इति ज्ञातृज्ञापनस्यैव अत्र सत्त्वेन, न अत्र विधिः किन्तु आवश्यकार्थे 'तव्य'प्रत्ययः इति.नच वस्तुतस्तु रूढएव अयम्-'अयम्'नातु योगार्थे गौणत्वम् उक्तम् इति (वाच्यं), यदा रूढिः तदातु अज्ञातृज्ञापनस्यैव सत्त्वाद्, ''रूढिः योगम् अपहरति'' इति न्यायात्. एवञ्च सति ''स्वाध्यायविधिः उच्यते'' इति प्रथमं यद् उक्तं तत् 'स्वाध्याय'शब्दस्य वेदे रऊढिः इति अभिप्रायेण. यदितु योगार्थेऽपि अवबुध्यते इति, तदातु आवशयकएव. अथ; आवशयकार्थएव 'तव्य'प्रत्ययो अभ्युपेयः, ज्ञातृज्ञापनात्. नात्र विधिः.

## *विवरणम्*

किञ्चित् प्रकरणम् आरभ्य न अधीतम् इति अर्थः. **एव**कारेण एतेषां वाक्यानां वेदान्तवाक्यानाम् इव काल्पनिकोपासनादिप्रकरणवदपि प्रकरणं नास्ति इति सूचितम्. हि इति युक्तिः, अध्ययनोत्तरमेव प्रकरणविभागसम्भवाद् इति अर्थः. तत्र प्रथमम्

एकार्थत्वं निर्धारयति एकार्थता तुइति. तुशब्दः अर्थभेदनिराकृत्यर्थः. सर्वत्र वायत्रयेऽपि एकार्थता अध्ययनबोधनपरत्वाद् इति अर्थः. तर्हि कः संशयः? इति चेत् तम् आहुः विशेषोऽपि उच्यते इति, वाक्येषु यो विशेषः प्रकारभेदः सोऽपि स्फुटं प्रकटं उच्यते इति अर्थः।।५।।

तमेव आहुः स्वाध्यायशब्दःइति, 'स्वाध्याय'शब्दस्य 'पङ्कजा'दिशब्दवद् योग–

शब्दे ह्यर्थे ह्यनुष्ठाने तथाध्येयो हि वैदिकैः।।८।।
अपर्णताद्यपहतपाप्मादिसकलैःगुणैः।
प्रजापतिमुखैः वेदो यथा हि पठितः पुरा।।९।।
तादृग्गुणविशिष्टोऽत्र वेदः 'स्वाध्याय'उच्यते।

---

*तत्त्वविवेकः*

किन्तु आवश्यकार्थे इति ज्ञातृज्ञापनं बोधयितुं मुख्याभावे प्रतिनिध्युपादानम् अर्थानुष्ठानं – यथा व्रीह्यभावे नीवाराः सोमाभावे पूतिका इति वा – बोध्यम्. पुनरपिज्ञातृमापनतां बोधयितुं भङ्ग्यन्तरेण 'स्वाध्याय'शब्दव्युत्पत्तिं वदन्तः अत्र 'स्वाध्याय'शब्देन ईदृशो (अर्थो) ज्ञातव्यः इति आहुः **अपर्णता** इत्यादि. एवञ्च **सुष्ठु आसमन्ताद् अध्येयो** गुरुमुखात् पठितव्यः, **तादृग्गुणविशिष्टः, यथाहि प्रजापतिमुखैः गुणविशिष्टः पठितः** इत्यपि अर्थो अत्र **यथाहि पठितः पुरा** इति कथनाद् ज्ञायते इति. अपगतम् ऋणं यस्मात् सो अपर्णः, तस्य भावः तत्त्वम् **अपर्णता** इत्यादयः. तथाच **अपहतपाप्मत्वादयो ये सकलाः गुणाः** तैः सहितः **वेदः प्रजापतिमुखैः यथाहि पठितः पुरा तादृग्गुणविशिष्टो** नाम 'स्वाध्यायोऽध्येतव्यः' इति वाक्ये तादृग्गुणयुकतः **वेदः 'स्वाध्यायः' उच्यते** इति अर्थः.

*विवरणम्*

रूढिसद्भावेन यागरूढत्वम् इति अर्थः. रूढिस्तु वेदे प्रसिद्धैवेति योगं निरूपयति **सुष्ठु** इति, **शब्दे ह्यर्थे ह्युनाष्ठाने तथाध्येयो हि वैदिकैः** सुष्ठु समीचीनः प्रकारः 'सू'पसर्गार्थः. **सर्वतो**अध्ययनम्. **आङर्थः**. अथवा **सुष्ठु** समीचीनम् अध्ययनम्



इति अर्थः. तत्सामीचीन्यम् आहुः **शेभनम्** इति. तदपि विवृण्वन्ति **नियमैः युतम्** इति, नियमाः ब्रह्मचर्यादयः. अथवा **शोभनं** गुणैः युतम् इति अर्थः. के ते गुणाः? इति आकाङ्क्षायाम् आहुः **देशे** इति, शुद्धत्व–देवालय–तीर्थाश्रितत्वादयो देशगुणाः, अनध्यायराहित्यादयः कालगुणाष, भृतकाध्यापकत्वादयो द्रव्यगुणाः, साधुत्वशक्तत्वादयः स्वगुणाः. **सर्वतो** अध्ययनं यथा संशयराहित्यं भवति तथा इति तद् आहुः **यथा शङ्का** इति. ननु निःसन्दिग्धतया अध्ययनस्य किं प्रयोजनम्? इति चेत् तत्र आहुः **शब्दे** इति, **अर्थे** अर्थसम्बन्धिनि **अनुष्ठाने** तन्निमित्तं

**'तव्य' स्त्वावश्यके प्रोक्तो न विधिः ज्ञातृबोधनात् ।।१०।।**

---

***तत्त्वविवेक***

पूर्वोक्त'स्वाध्याय'शब्दस्यैव अयं निष्कर्षार्थः इति एकएव अर्थः, न ततो भिन्नः. अतएव च उभयत्रापि 'गुण'पदम् अतिवरं मन्महे. लोके शब्दे तादृग्गुणाभावः, गुणे गुणानुङ्गीकाराद् – इहतु अलौकिके लोकविलक्षणे 'वेद'शब्दे तादृगगुणाः वर्तन्तएवेति न काचित् क्षतिरिति 'गुण'शब्दो अत्र 'धर्म'वचनो नतु 'चर्तुर्विंशतिगुण'वचनः.

इयञ्च मीमांसकानां वेदान्तिनां च परिभाषा भवति. तत्र अपर्णतात्वं च– अपगत–ऋणता नाम–वेदाध्ययेन ऋणत्रयेभ्यो निर्मुक्तो भवति, निष्पापो भवति इति. अपगतर्णत्वादि–निष्पापत्वादि–सकलगुण–विशिष्टो वेदः पठितः इति अर्थः. तादृग्गुणविशिष्टो वेदः 'स्वाध्यायः' उच्यते इति अर्थः. अतः परं मीमांसामते वेदादौ तादृग्गुणाभावे तत्पाठेन जीवस्य कथंवा निष्पापत्वादि; अतो वैदिकाः शब्दाः स्वयं पापरहिताः ऋणरहिताः च भवन्ति इति, यतो अन्योऽन्यं निष्पापान्(पं) करोति वेदइति. अतएव च ''स्वाध्यायोऽध्येतव्यः'' इति न विधिः इति आहुः **'तव्य'स्तावावश्यके प्रोक्तो न विधिर्ज्ञातृबोधनाद् इति**. अर्थद्वये हि 'तव्य'प्रत्ययः आवश्यके विध्यर्थे च इति. तत्रच अज्ञातज्ञापनं विध्यर्थः इति. ज्ञातृबोधनात् नात्र विधिः इति अर्थः. (यदि तु) विधिनैव हि अध्ययनं बोध्यते(ध्येत) यथा ''स्वर्गकामो यजेत'' इति तत्रच(तदातु) अवश्यं विधिनैव भाव्यम्.

*विवरणम्*

वैदिक: शब्दो **वैदिकै:** वेदोदितकर्मनिष्ठै: **तथा** नि:सन्दिग्धतया **अध्येय**इति अर्थ:. **हि** इति युक्तो अयम् अर्थो, नि:सन्दिग्धज्ञानाभावे सफलप्रवृत्तेः अनुपपत्ते:. अत: परम् एवम्प्रकारकाध्ययनएव वेदस्य 'स्वाध्याय'शब्दवाच्यत्वम् इति दृष्टान्तेन आहु: **अपर्णतादि**इति, **अपर्णता** ''ब्रह्मचर्येणर्षिभ्य:'' (तै.सं.६।३।१०) इति श्रुते: त्रिविधर्णराहित्यम्. **आदि**पदात् ऋषिदेवपित्रादिषु श्रद्धा. **अपहत**पाप्मत्वं त्रिविधपापनिवृत्ति:. एतेषां दोषाभावारूपत्वेऽपि जीवगतत्वेन गुणत्वं, जीवेषु दोषाभावस्यैव गुणत्वात्, नहि जीवेषु सहजगुणा: सन्ति, भगवद्दत्तानामेव ऐश्वर्यादीनां

**'स्वाध्याय' पदतो ज्ञेयं तन्माहात्म्यं फलं तथा।**

---

*तत्वविवेक:*

अत्र 'स्वाध्याय'(पद)वशेदेव तन्माहात्म्यफलावगमात्, स्वाध्यायाध्ययनस्य फलसाधनताबोधनेन प्रवृत्त्युपपत्ते:, अज्ञातृज्ञापनाभावेन 'स्वाध्याय'पदेनैव इष्टं यत् फलं तत्साधनत्वं ज्ञातं पुन: तस्यैव ज्ञानं विधिना क्रियते(येत), इष्टसाधनत्वं विध्यर्थइति. पुनरपि स्वाध्यायाध्यनस्य साधनत्वं विधिना ज्ञातमिति फलसाधनता या पूर्वं 'स्वाध्याय'पदत: ज्ञाता तज्ज्ञापको अयं विधि: जातइति, स्वाध्यायफलत: यद् दृष्टफलसाधनत्वं ज्ञातं तदज्ञातारं पुरुषं पुन: स्वाध्यायाध्ययनस्य इष्टसाधनत्वं विधि: बोधयतीति ज्ञातृबोधनाद् विधे: आवश्यकप्रयोजनाभावेन वैयर्थ्यं स्यात्. अत: कारणात् न विध्यर्थे 'तव्य' प्रत्यय: किन्तु आवश्यके 'तव्य'प्रत्यय: इति. तथासति न वैयर्थ्यं, शीघ्रकरणे मध्ये बह्वन्तरायो न पततीति प्रत्युत अधिकफललाभात्, तत्र आवश्यकार्थस्य विनियोगेन सार्थक्याद् इति भाव:. **'स्वाध्याय'पदतो ज्ञेयम् इति**. अथवा अत्र क्रमत: स्वाध्यायमाहात्म्यं सुष्ठु(कारि.७-८) इत्यादिना उक्तं - फलन्तु **अपर्णता** (कारि.९-१०)इत्यादिना उक्तमिति द्वयं द्वयस्थले(स्थलद्वये) वा ज्ञेयम्. एतदर्थस्तु 'स्वाध्याय'-इति पदं(दस्य) वर्तते, श्रुतौ 'स्वाध्यायोऽध्येतव्य:' इत्यत्र, तत: सकाशात् **तन्माहात्मयं फलं तथा** इष्टं फलमित्थम् इति वा. एवञ्च 'स्वाध्याय'शब्दमहिम्नैव तत्र प्रवृत्ति: भविष्यतीति न विध्यपेक्षा अस्ति पुन: अत्र. अत: 'तव्य'प्रत्ययस्य न विधानार्थकत्वं किन्तु आवश्यकार्थत्वम् इति. अतो विधि न: भवति ज्ञातृबोधनाद्, अज्ञातृबोधकस्यैव विधित्वम्, अज्ञातृज्ञापनं हि विध्यर्थइति. प्रकृतेतु 'स्वाध्याय'पदमहिम्नैव



अध्ययकर्तव्यता अवगतेति विधे: प्रयोजनमेव नास्ति इति अर्थ:।।६-१०।।

*विवरणम्*

यावत्कार्यम् अवस्थिते:, अतो गुणत्वं तै: कृत्वा **प्रजापतिमुखै:** चतुर्मुखप्रभृतिभि: **यथा पठित: पुरा** ब्रह्मकल्पादिषु तथा नियमवद्भि: वेदो अध्येय: इति अर्थ:. फलसिद्धि: एतादृशा अध्ययनेन भवतीति. फलाभिलाषुकत्वबोधनाय **प्रजापति** पदम्।।६-१०।।[१]

**ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं वाक्यमीर्यते।।११।।**

---

*तत्त्वविवेक*

इदमेव हि निरुक्तं **'स्वाध्याय'पदतो ज्ञेयं तन्माहात्मयं फलं तथा** इत्यनेन. तथा इत्यस्य **ज्ञातृज्ञापनता** इत्यत्र सम्बन्ध:. एवञ्च ''देहलीदीप''न्यायेन उभयत्र.

**ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं माक्यमीर्यते** इति, प्रथमं वाक्यन्तु ''अष्टवर्षं ब्राह्मणमुपनयीत्'' इति **द्वितीयं** ''तमध्यापयीत''इत्यत्र 'लिङ्' विधौ. अध्यापनविधिनैव उपनीतस्व(स्य) अध्ययनं ज्ञापितं - यस्य उपनयनं तस्यैव अध्ययनं इति. नहि अनुपनीतो अध्ययनार्थइति. ननु ''स्वाध्यायोऽध्येतव्य:'' इति विधि: कुतो न भवति इति आशङ्कायां वाक्यान्तरतोऽपि न विधि: इति आहु: **ज्ञातृज्ञापनसिद्ध्यै** इति, **ज्ञातु:** उपनीतस्य **ज्ञापको यो विधि:** अध्ययनज्ञापको यो विधि: - ''तमध्यापयीत'' इति, तस्य सद्भावादपि न विधि:. एवञ्च अध्यापनविधिनैव अध्ययनविधि: आक्षिप्तएवेति वाक्यान्तरत्वेन येन पुरुषेण ज्ञातमेव अध्ययनम्[१]... ज्योतिष्टोमादौतु वाक्यान्तरेण न अवगतं यथा अत्र इति हेतो: तत्र विधि: मन्तव्यएव इति सारम्. एवञ्च ज्ञातृज्ञापनसत्त्वाद् उभयथापि न विधि: इति निष्कर्षार्थ: इति तत्त्वम्. एवञ्च पूर्वन्तु 'स्वाध्याय'शब्दमहिम्नैव योगार्थम् अवबुध्य इष्टसाधनत्वज्ञानेन विधे: प्रयोजनभावात् न विधि: इति उक्तम्. तत्र योगार्थं(र्थो) न अवगतं(तो) ''रूढि: योगम् अपहरति'' इति न्यायात्; यदिच रुढार्थएव योगार्थान्वयो नियमेन, 'पङ्कज'शब्दे इव, इति वैदिकानां तथा अनुभवत्वाद् योगेऽपि मानम् इति विभाव्यते,

तदातु रूढ्यर्थस्यैव च यदा बोधो न योगार्थस्य तत्र 'स्वाध्याय'पदमहिम्नः सकाशात् फलसाधनता न अवगतेति, तदानीं विधिः कुतो न भवति इति सन्देहनिरासार्थं **ज्ञातृज्ञापनतासिद्ध्यै** इति उपात्तम्. वञ्च ''तमध्यापयीत'' इत्यनेन अध्ययनं ज्ञातमेवेति पुनरपि ज्ञातृज्ञापकं ''स्वाध्यययोऽध्येतव्यः'' इति वाक्यं जातमिति अज्ञातृज्ञापनाभावात् न विधिः इति अर्थः. यदिच नियमेन रूढार्थे योगार्थे(र्था)न्वयः, तदातु

---

*तत्त्वविवेक*

'स्वाध्याय'पदमहिम्नैव इष्टसाधनता अवगतेति, तेनैव विध्यसम्भवे पुनरपि द्वितीयवाक्येन अध्ययनं ज्ञातमेवेति ज्ञातृज्ञापनस्यैव सत्त्वात् न विधिः इति उक्तं तत्तु '''स्वाध्यायोऽध्येतव्यः' अयं विधिः न भवति'' इत्यत्र इदं दूषणं वाक्यान्तरतोऽपि लभ्यते इति एतदर्थम् आहुः **ज्ञातृज्ञापनतासिद्ध्यै** इति. केवलरूढित्वं वदतोऽपि कस्यचित् निरासार्थं च ''स्वाध्यायोऽध्येतव्यः'' इति ज्ञातृज्ञापनं भवति. तथाच एतद्वाक्यस्य ज्ञातृज्ञापनतासिद्ध्यै ''तमध्यापयीत'' इति द्वितीयं वाक्यम्. अत्र चेद् अध्यापनं विहितं तदा स्वतएव बालस्य अध्ययनम् आक्षिप्तम्. अतः ''तमध्यापयीत'' इत्यनेन बालस्य अध्ययनं चेद् ज्ञातम् अध्यापनसिध्यनुसारेण ततः तस्यैव अध्ययनस्य ज्ञापकं ''स्वाध्यायोऽध्येतव्यः'' इति वाक्यं जातम्. अतोहि ''स्वाध्यायोऽध्येतव्यः'' इत्यस्य **ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं वाक्यम् इर्यते** इति.

मीमांसकमते ''स्वाध्यायोऽध्येतव्यः'' इति विधिः, ''तम् अध्यापयीत'' इति अनुवादः. स्वाध्यायविध्यनुसारेण उपनयनप्राप्तेः, ''अष्टवर्षं ब्राह्मणम् उपनीयत'' इत्यपि अनुवादः. ''तस्माद् यज्ञोपवीत्येव अधीयीत'' (तै.आ.२।१) इति श्रुतेः यज्ञोपवीतिनएव स्वाध्यायाध्ययनं, नहि अनुपनीतस्य अध्यापनं सम्भवति. अर्थादेव उपनयनप्राप्तेः, ''..उपनयीत'' इति ''तम् अध्यापयीत'' इति अनुवादः.

अनुवादकत्वे वैयर्थ्यम् अर्थादेव सिद्धम्. अस्मन्मतेतु न कस्यापि वैयर्थ्यं किन्तु 'तव्य'प्रत्ययः आवश्यके-इति, अध्ययनप्राप्तिस्तु 'स्वाध्याय'पदमहिम्नैव इति पूर्वम् उक्तमेव. 'उपनयीत' इत्यत्र उपनयनविधिः 'अध्यापयीत' इत्यत्र च



अध्यापनविधिः. बालस्तु परतन्त्रो भवतीति गुरुव्यापारएव उपनायनम्. तेनैव उपना(न)यनं प्राप्तमिति ''तम् अध्यापयीत'' इत्यत्र अध्यापनविधिनैव अध्ययनं सिद्धमिति. मीमांसकमतेतु स्वाध्यायविधिबलादेव अध्यापनप्राप्तेः ''तम् उपनयीत् – तम् अध्यापयीत'' इत्येतस्मिन् स्वाध्यायविधिबलवशाद् आक्षिप्तं यद् अध्यापनं तस्य अनुवादः इति विमर्शः. तस्मात् मीमांसकनये उपनायने अध्यापने तात्पर्यभावात् ''स बालः उपनयेद्'' इत्यत्र अथच ''सो अधीयीत'' इत्यत्रैव च तात्पर्याद् इति तत्त्वम्.

**वसुरुद्रादित्यवर्षैः त्रयो वर्णाः क्रमाद् द्विजाः**
**अध्याप्या इति तस्यापि नियोगः श्रुतिचोदितः ।।१२।।**
**पराधीनतया बाले न विधिः श्रुतिचोदितः ।**

---

तत्त्वविवेकः

**वसुरुद्रादित्यवर्षैः त्रयो वर्णाः क्रमाद् द्विजाः अध्याप्याः इति क[त!]स्यापि** इति, सच ''एकादश रुद्राः द्वादशादित्याः''(बृ.उ.३।९।२) इति श्रुतेः. 'वसुः' इति अष्टसङ्ख्यायाः सञ्ज्ञा भवति, नियतसङ्ख्याकाः हि एत-इति, 'वस्वा'दिशब्दानाम् अष्टत्वादिसङ्ख्यावाचकत्वम् अभ्युपेयते इति. एवञ्च सति **त्रयो वर्णाः** ब्राह्मण-क्षत्रिय-वैश्याः **वसुरुद्रादित्यवर्षैः** अष्टवर्षैकादशवर्षद्वादशवर्षैः **क्रमाद् द्विजाः** नाम द्विजन्मानो भवन्तीति, ते अध्याप्याः इति. तथाच ब्राह्मणो अष्टवर्षैः द्विजो भवति, क्षत्रियः एकादशवर्षैः द्विजो भवति, वैश्यो द्वादशवर्षैः द्विजो भवतीति क्रमतो अध्यवसेयम्. तथाच वसुस्थानीयाः ब्राह्मणाः, रुद्रस्थानीयाः क्षत्रियाः, आदित्यस्थानीयाः वैश्याः इत्यादि ऊह्यं; * वैपरीत्येन वा, एवम् आदित्यस्थानीयाः ब्राह्मणाः, वसुस्थानीया वैश्याः इति आगतम्.* एवंसति त्रयो वर्णाः पूर्वोक्तवर्षैः क्रमतो **अध्याप्या-इति तस्यापि** अध्यापनस्यापि **नियोगो** विधिः **श्रुतिचोदितो विदितः** इति. अपिना उपनयनस्यापि इति. पराधीनतया इति, बाले पराधीनतया **विधिस्तु न** सम्भवति किन्तु आवश्यकत्वं सम्भवति इति अभिप्रायः. बालः पराधीनो अनभिज्ञइति तत्र अध्याप[ध्यय!]ने उपनयने च नास्ति विधिः. उपनयनविधि-अध्यापनविधिभ्यामेव उपनयनाध्याप[ध्यय!]नयोः आक्षिप्तत्वात् **न विधिः श्रुतिचोदितः** इति।।११-१२।।

''स्वाध्यायोऽध्येतव्यः'' अत्र नास्ति विधिः अध्ययनस्य इति उक्तम्. इदं

स्वतन्त्रम् इदं[!?] अनारभ्याधीतं वाक्यत्रयम्. अत्र एकस्मिन् उपनायनविधिः, द्वितीये च अध्यापनविधिः, तृतीयेतु अध्ययनं ज्ञानं वा इति ''साङ्गोऽध्येयो ज्ञेयश्च'' इत्यनेनतु न विधीयते, अत्र विधेः अभावात् किन्तु उपनयनाध्यापनयोः विधिः[प्रकारः!] इति ज्ञेयम्. अतो वेदाध्ययनन्तु अध्यापनविधानाद् आक्षिप्तं जातं परन्तु तस्य अध्ययनस्य कथं सिद्धिः भवतु!

---

१. *....* चिह्नांकितो भागः प्रक्षिप्तांशएव प्रतिभाति.

**तथाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते ।।१३।।**
**साङ्गेऽधीते तथा ज्ञाते स्वाध्यायस्तस्य सिध्यति।**
**अध्यापनप्रयुक्तं हि प्रथमं 'लिङ्'प्रयोगतः ।।१४।।**
**आत्मनेपदतः स्वस्य स्यातां वृत्तिश्च सेत्स्यति।**

**(१)उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।।(म.स्मृ.२।१४०).**
**(२) आचार्यवान् पुरुषो वेद (छा.उ.६।१४।२).**

---

तत्त्वविवेकः

तदर्थं **तृतीयं वाक्यं** ''साङ्गोऽध्येयो ज्ञेयश्च'' इति वाक्यम् ईर्यते. इदमेव उक्तं **तथा अध्यापनसिद्ध्यर्थम्** इत्यनेन, तथाच विधिः नास्ति किन्तु अध्ययनं ज्ञानं च आवश्यकं भवति इति अर्थः. एतदेव आहुः **साङ्गे अधीते तथा ज्ञाते स्वाध्यायस्तस्य सिध्यति इति,** ''सा ी अध्येयो ज्ञेयश्च'' इति. **साङ्गे अधीते तथा** वेदे **ज्ञाते** सति **स्वाध्यायो** वेदः **तस्य** बालस्य **सिध्यति** इति सम्पूर्णवेदस्य सिद्धिः जाता इति अर्थः. इदमेव फलं दृष्टं न अन्यद् इति.

**अध्यापनप्रयुक्तं हि प्रथमं 'लिङ्'-प्रयोगतः, आत्मनेपदतः स्वस्य स्यातां वृत्तिश्च सेत्स्यति** इति अध्यापने विधेः सत्त्वाद् अध्यापनप्रयुक्तम् अध्ययनं भवतीति अध्यापनाभावे अध्ययनं न स्यादेवेति, अध्यापनप्रयुक्तम् अध्ययनं भवतीति



प्रथमम् अध्यापनम्. प्रथमं नाम ''साङ्गो वेदो अध्येयः'' इति एतद्वाक्योक्ताध्ययनात् **प्रथमं** ''तम् अध्यापयीत'' इति वाक्येन अध्ययनम् उक्तम् इति अर्थः. हि युक्तश्च अयम् अर्थः-योहि यत्प्रयुक्तः स तदनन्तरम् उच्यते. एवं यथा उपनायनानन्तरम अध्यापनम् एवञ्च **'लिङ्'-प्रयोगतः** -'अध्यापयीत' इति 'लिङ्'-प्रयोगो वर्तते चेद् विधिः वर्तते, अतः कारणाद्-अध्यापनं प्रधानं, विधिवाक्ये बोधितत्वात्, तत्प्रयुक्तम् अध्ययनम् अध्यापनविध्यनुसारेण प्राप्तम् इति. 'लिङ्'प्रयोगतो अध्यापनप्रयुक्तम् अध्ययनमिति प्रथमम् अध्यापनम् उक्तम् इति भावः. अग्रे **अध्यापनप्रयुक्तं हि तस्मादध्ययनं मतम्** (पत्रा.कारि.:१७) इति उक्तेः अत्रापि तदेकत्वार्थम् ''अध्यापनप्रयुक्तम् अध्ययनम् उच्यते'' इति भावः. अत्र 'अध्यापयीत'

**(३) आचार्यं मां विजानीयात् (भाग.११।१७।२७).**
**(४)गच्छेदाचार्यसंसदि (    ) इति.**

---

तत्त्वविवेकः

इति प्रत्यक्षतो 'लिङ्'-प्रयोगतः श्रूयमाणएव विधिः न अत्र आवश्यकार्थे इति वक्तुं शक्यं-''स्वाध्यायोऽध्येतव्यः'' इत्यत्रतु ''आवश्यके विध्यर्थे वा?'' इति अर्थद्वयोऽपि 'तव्य'प्रत्यय-इति सन्दिग्धमिति, सन्दिग्धासन्दिग्धयोः असन्दिग्धं ह्येव ज्याय-इति, तदनुसारेणैव व्याख्येयमिति. अत्र वेदाध्ययनविधिः प्रत्यक्षः, तदातु तदनुसारेणैव अध्ययनप्राप्तेः ज्ञातृज्ञापनस्यैव सत्त्वाद् वादिरीत्या अनुवादकत्वे मिथ्यात्वं स्यादिति, अनया रीत्या स्वाध्याये अध्येतव्ये सति अत्र 'तव्य'प्रत्ययः आवश्यके वक्तव्यएवेति, न अत्र काचन विप्रतिपत्तिः इति तत्त्वम् आलोचनीयम्. अध्यापनप्रयुक्तम् अध्ययनं भवतीति प्रथम'लिङ्'प्रयोगतः अध्ययनविधिः इति अर्थः. ''उपनयीत तम् अध्यापयीत'' **इति आत्मनेपदतः स्वस्य** अध्यापकस्य **स्याताम्** उपनयनम् अध्यापनं च स्याताम्. आत्मनेपदतः स्वस्य वृत्तिरपि **सेत्स्यति** इति. **वृत्तिः** वर्तनं जीवनम् अध्यापनस्य फलम्. ''देशे काले गुरौ स्वस्मिन्'' इति पूर्वप्रक्रमितत्वात् सएव अधुनापीति, **स्वस्य** नाम गुरोः आचार्यस्य **स्याताम्** अध्यापनम् अध्ययनं च स्याताम्.

उपनायनं च एकेन कर्तव्यम् अध्यापनं च एकेन[अपरेण!] कर्तव्यम् इति कथं न स्यात्? तत्र उच्यते-न स्याद्! आत्मनेपदतः ''तम् उपनयीत तम् अध्यापयीत'' इति उभयत्र सामानाधिकरण्यादिति, यएव उपनयेत् सएव अध्यापयेदिति. **स्वस्यैव आत्मनेपदतः** नाम समानाधिकरणात्मनेपदतः स्वस्यैव एतद् द्वयं स्यातां ननु

एकस्य उपनयनम् अन्यस्य च अध्यापनं – ''यएव उपनयीत सएव अध्यापयीत'' इति सामानाधिकरण्याद् अवगम्यते इति भावः. **वृत्तिश्च सेत्स्यति** इति, स्वस्यैव फलम् उपनयनाध्यापनयोः. नहि उपनायनमेव अध्यापनमेव च वृत्तिः, तस्याः जीवनरूपत्वेन उपनायनाध्यापनक्रियाफलत्वात्, ततो भिन्नत्वादिति. अथवा ''अध्यापनप्रयुक्तम् अध्ययनं भवति'' इति **प्रथमम्** उक्तं नाम अध्यापनं प्रथमं ''साङ्गो अध्येयः'' इति उक्तम् – अध्यनात् प्रथमं ''तम् अध्यापयीत''

**स्वातन्त्र्ये च तथा जाते तस्यावश्यकमीर्यते ।।१५ ।।**
**मर्यादाभङ्गतः केचित् कृत्ये विध्यर्थतां जगुः ।**

---

तत्त्वविवेकः

इत्यनेन अध्यापनम् उक्तम्. अथच 'लिङ्'प्रयोगतः, एतावता विधिः प्रदर्शित– इति, विधिः चेत् तदा कर्तव्यमेव नोचेत् कदाचित् न कुर्यादपीति. अतो 'लिङ्'प्रयोगतः स्वस्य गुरोः उपनायनकर्तुः **स्यातां नाम** नियमेन स्याताम्. अन्यथा विध्यभावे नियमेन उपनायनम् अध्यापनं च एते न स्याताम् इति वा अर्थो बोद्धव्यः. अथच **आत्मनेपदतः** नाम क्रियाफलस्य आत्मगामित्वबोधकात्मनेपदतः **स्वस्य** उपनायनाध्यापनक्रियाकर्तुः वृत्तिरूपं फलं च **सेत्स्यति** इति क्रमतो योजनम् अवधेयम् इति दिक्. आचार्यत्वप्राप्तिरपि फलं, क्रियाफलस्य आत्मगामित्वात्. सेत्स्यति इति अन्ते ज्ञातृज्ञापनतासिद्धिः जातेति. एवञ्च स्वस्मिन् फलसिद्ध्यर्थं प्रथमम् 'अध्यापयीत' इति उक्तं; पश्चात्तु ''साङ्गो वेदोऽध्येयो ज्ञेयश्च'' इति उपात्तम्. आत्मनेपदेन स्वगामिक्रियाफलबोधनार्थम् आचार्यत्वरूपं फलम् उपात्तं; शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् इति षडङ्गसहितं च. **स्वातन्त्र्ये च तथा जाते इति**, तथा नाम पूर्वोक्तप्रकारेण स्वातन्त्र्ये च जाते सति; अर्थात् ''तमध्यापयीत'' इति अध्यापनविधेः, तस्यैव उपक्रमेण प्रकरणित्वात्. तथाच ''तम् अध्यापयीत'' इति विधिः स्वतन्त्रो भवति, विधिवाक्यत्वात्. तथा जाते पूर्वोक्तप्रकारेण जाते, नाम बालः परवशो भवति स्वाधिकारं न जानातीत्यतः तस्य अध्ययनविधेः असम्भवाद् अध्यापनविधेः प्राधान्यम्. अध्यापनविधेः प्राधान्ये गुरुणा तस्य आवश्यकम् अध्ययनं जातं, स्वाधिकाराभावेऽपि बालस्य आचार्यद्वारा अध्ययनविधेः आवश्यकत्वं तस्य बालस्य अध्ययनम् आवश्यकं कथ्यते. ''स्वाध्यायोऽध्येतव्यः'' इत्यनेन आवश्यकम् अध्ययनम् ईर्यते इति अर्थः; नतु विधीयत इति. अध्ययनविधेस्तु



न स्वातन्त्र्यं बालस्य पराधीनतया तस्य अध्ययने विधेः असम्भवात्. तथाच यत्र स्वातन्त्र्यं तत्रैव विधिः इति फलितम् ।।१३–१५ ।।

**मर्यादाभङ्गतः केचित् कृत्ये विध्यर्थतां जगुः. शब्दार्थमनपेक्ष्य एवं निर्णयं च स्वबुद्धितः** इति, बालस्य अन्यविधिप्रयुक्तम् अध्ययनं,

**शब्दार्थमनपेक्ष्यैवं निर्णयं च स्वबुद्धितः ।।१६ ।।**
**अध्यापनप्रयुक्तं हि तस्मादध्ययनं मतम् ।**
**एतर्ह्यपि तथैवैतन्न कार्या कल्पना ततः ।।१७ ।।**

---

तत्त्वविवेकः

नतु स्वविधिप्रयुक्तम् इति **मर्यादाभङ्गः –** सो अध्यापनं करोति चेत् तस्य अध्ययनं सिध्यति इति. स्वस्य अध्ययनविधिप्रयुक्त–फलालाभाद् वैदिकं फलन्तु न भवति. तथाच लौकिक–फल–कल्पनापत्तिः स्यात्. तथा सति मर्यादाभङ्गः स्यात्. अतः ''स्वाध्यायोऽध्येतव्यः'' इति 'कृत्' प्रत्यये **विध्यर्थतां जगुः** अयं विधिः भवति इति केचिद् आहुः. विधिः चेत् तदातु अवश्यं फलं भवति. नहि कदाचिदपि विधिः[१] भवति. तच्च फलं दृष्टं वा अदृष्टं वा इत्यन्यदेतत् तथाच न फलकल्पनम् इति.

'स्वाध्याय' **शब्दार्थम् अनपेक्ष्य एवं स्वबुद्धितः निर्णयं जगुः** चक्रिरे इति अर्थः. 'स्वाध्याय'शब्दापेक्षायान्तु न अध्ययनविधिः किन्तु अध्यापनविधिरेव पर्यवस्यतीति पूर्वम् उक्तमेव इति भावः. एवञ्च 'स्वाध्याय'पदमहिम्नैव तदध्ययनफलसमर्पणे कृते सति ततएव नियमतः तद्रागवतः प्रवृत्त्युपपत्तेः पूर्वोक्त[म्!] [अ!]किञ्चित्करमेव **अध्यापन– प्रयुक्ते(क्तं!)** हि इति, तस्मात् 'स्वाध्याय'शब्दार्थम् अनपेक्ष्यैव स्वबुद्धिवशतो विधिः मन्वते; अतः प्रामाणिकम् इदं न भवति, ज्ञातृज्ञापनात्. अतो अध्यापने विधिः, अज्ञातृज्ञापनात्. **तस्माद् अध्यापनप्रयुक्तम् अध्ययनं मतं** सम्मतम् इति अर्थः. हि युक्तत्वे निश्चये वा.

**एतर्ह्यपि इति, एतर्ह्यपि** नाम अध्यापनप्रयुक्तम् अध्ययनम् अस्मिन्नपि पक्षे, **एतद्** अध्ययनं **तथैव** अध्यापनविधिवदेव, **ततः** फल**कल्पना न कार्या** इति. अत्र फलश्रवणाभावेऽपि अर्थात् फललाभो भवति. गुरोरेव आचार्यत्वानुरोधेन अध्ययनस्य इदमेव फलं यद् गुरोः आचार्यत्वसिद्धिरेव, वृत्तिः वा, वाक्यार्थनिर्णयविषये

क्रियमाणे वा एवञ्च स्वाध्यायो अध्येतव्यः।।१६-१७।।

---

१. इह 'फलरहितः' इति अंशः त्रुटितो भाति.

तत्र संशयमापन्ना बुद्धिर्वाक्यार्थनिर्णये।
एकवाक्यत्वसन्देहाद् ऐकार्थ्याभावतः स्फुटम्।।१८।।
स एकोऽर्थोऽत्र वक्तव्यो यच्छरीरप्रवेशतः।
एकार्थतां श्रुतिर्याति तदभावे तु निष्फला।।१९।।
कुण्ठितैव भवेन्नूनं वेदाध्ययनबोधने।
''वेदोऽखिलो धर्ममूलं'',''धर्मो यस्यां मदात्मकः''।।२०।।
एवं पूर्वर्षिभिः प्रोक्तं जैमिनिः प्रथमं स्वयम्।
निश्चित्य लोकशिक्षार्थम् अर्थप्राधान्यतस्तथा।।२१।।
धर्मं विचारयामास प्रामाण्यादिपुरस्सरम्।
सन्देहस्तु पुनर्जातो वेदान्तेषु यथा पुरा।।२२।।
एकवाक्यत्वमेषां हि धर्मकाण्डे कथं भवेत्।

---

तत्त्वविवेकः

इदन्तु सिद्धम्!

तत्र ''एकएव सकलस्वाध्यायवाक्यार्थः उत भिन्नो वा?'' इति संशयंप्राप्ता बुद्धिः इति अर्थः. समस्तं वेदवाक्यम् एकम् उत भिन्नम् इति एकवाक्यत्वसन्देहः=ऐकार्थ्याभावः तच्च स्फुटम्. एकवाक्यत्वसन्देहात् संशयम् आप्नोति इति! पूर्वेण अन्वयो. अतः कारणात् स एको अर्थो वक्तव्यो वेदार्थः एवं वक्तव्यो यादृशार्थबोधेन एकार्थतां लभते श्रुतिः. यस!एव एको वेदार्थः, तादृशार्थाभावेतु निष्फला श्रुतिः-एकार्थत्वाभावे श्रुतेः तात्पर्यं कुत्रापि नास्तीति श्रुतिः कुण्ठितैव भवेत्. तदा निश्चायकत्वाभावात् श्रुतेः[!?] इति, निश्चायिका श्रुतिः न स्यादिति-''अयं वेदार्थो वा किम् अथवा?'' इति सन्देहएव भवेत्, न अर्थबोधः इति, अस्यां श्रुतौ.

मदात्मको धर्मो भवति भगवत्स्वरूपात्मकः. भगवद्वाक्यस्थम् इदं पदं ज्ञेयम्.

सन्देहस्तु पुनः जातः इति, यथा पूर्वे, एकार्थत्वम् उत भिन्नार्थत्वं वा? तथैव



अधुना वेदान्तेषु सन्देहो जातः-एषां वेदान्तवाक्यानाम् एकवाक्यता कथं भवेद् धर्मकाण्डे? इति.

**धर्मः पञ्चविधो द्वेधा षड्भिः सम्पद्यते तु सः।।२३।।**
**देश-काल-द्रव्य-कर्तृ-मन्त्र-कर्म-विभेदतः।**
**सर्वो वेदस्तेषु लीनो वेदान्तेषु विचार्यते।।२४।।**
**''यदेव विद्यये'' त्याह ''ब्रह्मा ब्रह्मिष्ठ'' एव च।**
**तज्ज्ञानं तेषु हि शक्तं कर्तृशेषास्ततस्तु ते।।२५।।**
**''ज्ञाननिष्ठाय देयानि कव्यानी''ति यथा तथा।**
**फलश्रुत्या पूर्वकाण्डसमाप्त्या चावगम्यते।।२६।।**
**''ब्रह्मविद् ब्रह्म भवति'',''परं वाप्नोति'' कुत्रचिद्।**
**''वेदमनूच्य आचार्य'' इत्युक्तोपनिषद्वचः।।२७।।**

---

तत्त्वविवेकः

**पञ्चविधो धर्मः तेषु** नाम विना रूपज्ञानं धर्मेषु **शक्तं, ''यदेव विद्यया करोति''**(छा.उ.१।१।१०)[इति]. **पुरुष...**[!?] इति, पुरुषरूपकर्तृशेषत्वं धर्माणां विज्ञायते इति वा।।१८-२५।।

**ज्ञाननिष्ठाय** इत्यादौ कव्यानां पुरुषशेषत्वं पुरुषनिर्मित[मित्त!]त्वं यथा तथा धर्माणां पुरुषशेषत्वम्. यदेव ''विद्यया करोति'' इति धर्माणां कर्तृनिमित्तता भवति-कर्तुः अङ्गभूताः भवन्ति धर्माः इति. 'यदेव' इत्यत्र कर्ता प्रधानभूतः कर्मतु अप्रधान[नं!]शब्दतः एतादृगेव बोधः इति. **ज्ञाननिष्ठाय कव्यानि देयानि** इति यथा अत्र पुरुषशेषत्वं कव्यानां भवति तथा कर्तृशेषत्वं धर्माणां **फलश्रुत्या पूर्वकाण्डसमाप्त्या च अवगम्यते** इति, **''ब्रह्मविद् ब्रह्म भवति''**(मु.उ.३।२।९) इति **फलश्रुतिः** धर्माणामेव फलश्रुतिः **कुत्रचित्** शाखायां पर्याप्तं फलं ''ब्रह्मविद् **आप्नोति परम्''**(तै.उ.२।१।१) इतिवत् परब्रह्मप्राप्तिफलम् इति अर्थः. वेदं सम्पूर्णम् अनूच्य उक्त्वा अध्याप्य आचार्यो भवतीति. **''वेदं सम्पूर्णम्''** इति पूर्वकाण्डसमाप्तिः. तथाच फलश्रुत्या अत्रच पूर्वकाण्डसमाप्त्या च एवम् अवगम्यते इति अर्थः. एवं नाम पूर्वोक्तं धर्माणां कर्तृशेषत्वं ब्रह्मात्मत्वादिनिरूपणं ''यदेव विद्यया करोति'' इत्यत्र उक्तं यदेव तत्तद् अवगम्यते. ''ब्रह्मविद् ब्रह्म भवति'' इत्यत्रतु फलश्रुत्या धर्माणां ब्रह्मात्माकत्वं; ''वेदम् अनूच्य'' (तै.उ.१।११।१)

इत्यत्रतु पूर्वकाण्डसमाप्त्या च धर्माणां कर्तृशेषत्वम्. सम्पूर्णं वेदम् अनूच्य

**शास्त्रान्तरेऽप्येवमेव वैदिकानां मतं तथा।**

**अतः स्वतन्त्रता वाच्या तथा चेन्नैकवाक्यता ।।२८।।**

**''वेदोऽखिलो धर्ममूलम्'' इत्यादिश्च विरुद्ध्यते।**

**वैदिकानामभिध्यानं स्वरादिनियमैर्युतम् ।।२९।।**

**वेदा एवं नचान्यार्था वाच्या बुद्धिमता क्वचित्।**

---

तत्त्वविवेकः

आचार्यो भवतीति, आचार्यत्वसिद्ध्यर्थं सम्पूर्णो वेदो विनियुक्तो जात-इति, तदनु **अन्तेवासिनं** शिष्यम् **अनुशास्ति** शिक्षयति. '''ब्रह्मज्ञानोपदेशेन कर्तृशेषत्वं धर्माणाम्'; **इति, उक्तं** च तद् **उपनिषद्वचःच** =उक्तोपनिषद्वचः''. अथवा ''वेदम् अनूच्य आचार्यः'' **इति उपनिषद्वचः उक्ता शास्त्रान्तरेऽपि एवमेव** नाम एतदर्थप्रतिपादकमेव वैदिकानां वचनं तिष्ठति. एतादृशं कर्तृशेषत्वावबोधकं धर्माणां ब्रह्मत्वावबोधकं च वचः शास्त्रान्तरेऽपि तिष्ठतीति. अतः तथा नाम धर्माणां कर्तृशेषत्वं; पूर्वकाण्डसमाप्तिः जाता तयापि च धर्माणां कर्तृशेषत्वम् अवगम्यत-इति, अन्तेवासिनः वेदान्तवाक्यैः शिक्षणेन, ब्रह्मात्मत्वं च. अतः कारणात् कर्मज्ञानकाण्डयोः **स्वातन्त्र्यं वाच्यम्**-इदं पूर्वकाण्डं कर्मप्रतिपादकम्; इदं च उत्तरकाण्डं सर्वस्य जगतः ब्रह्मात्मत्वप्रतिपादकम् इति वाच्यम्. **तथा** काण्डद्वयस्य **न एकतावाक्यता** इति अर्थः. एवञ्च सति धर्ममूलं वेदो अखिलो वेदो धर्मप्रतिपादको जात-इतिच कथं ब्रह्मप्रतिपादकता ? तस्यापि सत्त्वाद् इति अर्थः.

**वैदिकानां स्वरादिनियमैः** युतं स्वरादिनियमविशिष्टं तत्सहितं वेदाध्ययनं कर्तव्यम् इति यावत्. अथवा अत्र **''इत्यादिर्वा''** इति पाठः. तथाच वैदिकानां स्वरादिनियमैः युतो वेदो अखिलो धर्ममूलम् इत्यादि च अभिध्यानं तत् **सर्वं विरुध्यते** इति अर्थः. स्वतन्त्रतायाम् एकताभावे विरुध्यते इति अर्थः.

**एवं नाम** एवंप्रकारेण धर्मब्रह्मप्रतिपादकत्वे एकत्वविरोधः समायाति. एवंप्रकारेण वेदाः **अन्यार्थाः** ब्रह्मातिरिक्तार्थाः **नच वाच्याः बुद्धिमता क्वचिद्** इति अर्थः. यद्वा **वेदाएव** प्रथमतो अन्यार्थाः न वाच्याः-एकार्थाः वाच्याः; तन्मध्ये वेदान्तानामपि सत्वाद्, एकता स्यात् पूर्वकाण्डाद् इति अर्थः ।।२६-२९।।

**अतो 'वेदान्तवाक्यानि' च इति! प्रसिद्धिः. वैदिकानामपि**



**तथैव प्रसिद्धिः ! इति चेद्, एवं लोकसिद्धस्य जगतो लोकप्रतीतिं बाधित्वा ब्रह्मत्वेन**

---

तत्त्वविवेकः

**अतः** कारणाद् **वेदान्तवाक्यानि च नाम** वेदान्तवाक्यप्रधाना **प्रसिद्धिः** इति अर्थः. तत्रैव ब्रह्मावबोधने तात्पर्याद् इति भावः. अनेन सर्वोऽपि वेदो ब्रह्मपरएव इति सिद्धम्. **वैदिकानामपि तथैव प्रसिद्धिः** इति नाम, काण्डवाक्याग्र्यात् प्रसिद्धिः **इति चेद्,** एवं सति उभयसिद्धौ **अर्धजरतीयन्यायो** दूषणं, **लोकप्रसिद्धजगतः लोकप्रतीतिं बाधित्वा ब्रह्मात्मकत्वं वेदान्तवाक्यैः सम्पाद्यत-इति** तेषां वादिनां मते अर्धजरतीयन्यायः. सर्वथातु ब्रह्मात्मकत्वेन सिद्धं किन्तु प्रथमतो लौकिकत्वं पश्चाद् ब्रह्मात्मकत्वमिति, सर्वदा ब्रह्मात्मकत्वं न सिद्धमिति अर्धजरतीयन्यायापत्तिः इति दूषणमिति. तदन्तत्वं कर्मकाण्डप्रतिपादकवाक्यान्तत्वम्. यथा एका स्त्री पूर्वभागतः युवती उत्तरभागतः वृद्धा, एकसमयावच्छेदेन सा यथा न कस्यापि कार्याय उपयुज्यते तथा एकएव वेदः पूर्वभागतश्च पूर्वकाण्डात्मकः कर्मप्रतिपादकः उत्तरभागतश्च ब्रह्मप्रतिपादक इति नापि कर्मस्वरूपैकप्रतिपादको नापि ब्रह्मात्मैकस्वरूपार्थप्रतिपादको जातः इत्यस्माद् हेतोः तदन्तत्वम् इति अर्थः. अर्धजरतीयन्यायः आगतः तस्मात् ''समस्तो वेदो ब्रह्मपरः'' इति मन्तव्यम्. तथा एकार्थत्वं सम्यग् अस्य वेदस्य सिद्धम्. लौकिकत्वमपि दृढं नास्ति नापि ब्रह्मात्मकत्वमिति अर्धजरतीयन्यायात् सर्वोऽपि वेदो ब्रह्मपरः इति वरं तदन्तत्वं तत्प्रधानत्वं वेदान्तानां ब्रह्मप्रधानत्वम् इति यावत्. सर्वोऽपि वेदः चेद् ब्रह्मपरो जातः, तदानीम् एकार्थत्वाद्- ''अयं पूर्वभागो अयं च परभागः'' इति विषयव्यवस्थापि स्यात्. ब्रह्मपरत्वाभावे एकार्थप्रतिपादकत्व[त्वा!भा]वाद्-'' अयं पूर्वभागो अयं च परभागः'' इति विषयव्यवस्थापि न[!] स्यात्. **भिन्नार्थप्रतिपादकत्वम्** इति ''स भिन्नो अयं च भिन्न''-इति. ''अयमेव च पूर्वभागो अयमेव च परभागः'' इति विषयव्यवस्था वक्तुं न शक्यतएवेत्यतः एकस्मिन्नेव पदार्थे 'पूर्वापरभागः' इति व्यवस्था भवति यथाग्रन्थः. इतरथा भिन्नानामपि चेद् एवं व्यवस्था वक्तुं शक्येत तदा भिन्नानामपि ग्रन्थानां न्यायादीनां

**अलौकिकत्वं सम्पाद्यतइति अर्धजरतीयन्यायात् तदन्तत्वम्!**

**ननु लोकनिपुणाः कथं मन्यन्ते ? शब्दार्थविचारेण इति ब्रूमः. कथम् ? शब्दानाम् अर्थे विचार्यमाणे ब्रह्मैव सर्वं भवति.**

**'घटपटा'दिशब्दाः धर्मवाचकाएव भवितुमर्हन्ति. घटत्वादिविशिष्टवाचका ह्येते इति लोकप्रसिद्धिः. 'घटत्वम्' इति घटगतो धर्मः कश्चिद् *तत्सहायकृतं...* [१] यत्सद्भावाद् 'घट'पदवाच्यता धर्मिणः. ''तस्य भावः त्वतलौ'' (पा.सू.५।१।११९) इति त्वो भावप्रत्ययः. 'भावः' इति 'भू'धातोः घञि रूपम्. 'भू'धातुः सत्तायां व्याप्तौ वा. उभयथापि व्यापकस्य सतो वा धर्मस्य वाचको भवति. 'घञ्' च स्वार्थे,**

---

तत्त्वविवेक

शास्त्राणां च तत्र ''कश्चन पूर्वभागः कश्चन परभागः'' इति व्यवस्था क्वचिद् उपलभ्यतेभ्येत!. यदि चेत् कदाचित् स्यादपि सा सर्वेषाम् एकत्वशास्त्रत्वेन अभ्युपेत्यैवेति तथा इति भावः. अतः कारणात् तदन्तत्वम्.

इदानीन्तु विषयव्यवस्था सम्यग् वक्तुं शक्यते, विषयव्यवस्थाभावे – ''को वा पूर्वः को वा अपरः ?'' इति **लोकनिपुणाः** ब्रह्मात्मकत्वं **कथं मन्यन्ते** इति अर्थः. **तत्सहायकृतं[!?]** नाम 'घट'शब्देन घटत्वविशिष्टव्यक्तिबोधे जननीये घटात्वादिधर्मोः घटधर्मिसहायकृत्. धर्मिणः सहाये करणमेव उपपादयन्ति **यत्सद्भावाद्** घटत्वविशिष्टव्यक्तेः **'घट'पदवाच्यता,** 'घट'शब्दस्य धर्मबलेन इति अर्थः. **'तत्'** शब्दस्य पूर्वपरामर्शित्वादपि तथा. स्वार्थे 'घञ्' एवञ्च घटसत्ता घटप्रा[व्या!]प्तिः च इति घटभावः. **धर्मस्य वाचको** धर्मवाचकः. **व्यापकस्य इति सतः** इति षष्ठ्यन्तस्य धर्मेण समन्वयः, एकदेशान्वयस्य स्वीकारेण. प्राचीनमतानुसारेण ''क्वचिद् [एक!]देशान्वयस्यापि स्वीकृतत्वाद्'' (    ) इति उक्तेः, तस्यापि

---

१. *....* चिह्नांकितः कश्चनांशोऽत्र टीकाकृच्छ्रीगिरिधराभिमतपाठे त्रुटितो भाति.

**अन्यथा अनवस्था स्यात्. तथाच घटत्वं नाम सतो व्यापकस्य वा धर्मः इति उक्तं भवति. एवं पटत्वादिष्वपि. तथा प्रकृत्यर्थः ब्रह्मैव अर्थः प्रतीयते[१]... सत्ता सद्रूपैव, ब्रह्मैवेति नतु ततो अतिरिच्यते[२]... आकृतिविशेषव्यङ्ग्याः धर्माः. ते भिन्नाएव शक्तिसङ्कोचेन व्यवहारसिद्ध्यर्थं अङ्गीकर्तव्याः. तथाच**



**'घटा'दिशब्दाः 'अरुणा'दिशब्दवद् धर्मवाचकाः [३]* शास्त्रदीपिकायाम् आकृत्यधिकरण... जातावेव शक्तिः स्थापितेति व्यवहारे भट्टनयः...***

**अतः कृतापि जिज्ञासा कुण्ठितैव भवेद् ध्रुवम्।।३०।।**

---

तत्त्वविवेकः

प्रामाणिकत्वात्. तथाच व्यापकरूपो यो धर्मः तद्वाचको भवति. सतः सद्रूपो धर्मः सत्ता, तद्वाचको भवति इति अर्थः. तथाच घटसत्ता घटव्यापनं च इति अर्थः. **तथा प्रकृत्यर्थः ब्रह्मैव. अर्थः प्रतीयते** इति, तथा ब्रह्मभिन्नएव अर्थः प्रतीयते इति न. ब्रह्मभिन्नो अर्थो नैव प्रतीयते इति अर्थः. तथाच लोकप्रतीतौ घटत्वविशिष्टवाचको, वस्तुतस्तु धर्मवाचकः. तथा 'घट'पदेन घटव्यापनं घटसत्ता वा. घटसत्तातु ब्रह्मैव. व्यापनञ्च ''व्याप्नोति इति 'व्यापनं''' 'व्यापकः' इति अर्थः. **सत्ता सद्रूपैव, ब्रह्मैवेति नतु ततो अतिरिच्यते** इति, 'घट'शब्देन सत्ता प्रतीयते चेत् सत्तातु ब्रह्मरूपैवेति. ब्रह्मवाचकत्वं 'घटा'दिशब्दानां प्रतीयतइति घटत्वादिरूपे धर्मे शक्तिः 'घट'पदस्य, **'अरुणा'दिशब्दवत्** शब्दानां विशेषणवाचकत्वं जातौ शक्तिः इति अभिप्रायेण. **शास्त्रदीपिकायाम् आकृत्यधिकरणे[णमि!]ति** मीमांसकमतमेव अत्र **गृह्यते** आद्रियते, **जातावेव शक्तिः स्थापितेति, व्यवहारे भट्टनय** इति.

**अतः** सर्वस्यापि वेदस्य ब्रह्मपरत्वे जैमिनिना **धर्मजिज्ञासा कृतापि कुण्ठिता भवति,** धर्मप्राधान्यविरोधिका इति अर्थः. अतः ते वैदिकाः

---

१.२. टीकाकृच्छ्रीगिरिधरचरणाभिमतः पाठः इह भिन्नः त्रुटितः च प्रतिभाति.

३. *....* चिह्नांकितो भागो भिन्नएव कश्चन पाठः त्रुटितश्चापीति सम्भाव्यते.

**अनारभ्याधीतगार्ह्यस्मार्ता इव भवेद् यदि।**
**प्रक्रिया महतां वृत्तिः स्वातन्त्र्यं चात्र तेन न।।३१।।**

**धर्मार्थकाममोक्षार्थं श्रेयः स्मार्तं न वैदिकम्।**
**पुरुषेक्षावशेनैते साध्यसाधनतां गताः ।।३२।।**
**अलौकिको हि वेदार्थः प्रमाणान्तरगो नहि।**
**परमात्मविचारेण ते चत्वारो ह्यलौकिकाः ।।३३।।**

---

तत्त्वविवेकः

धर्माः **अनारभ्याधीत–गार्ह्यस्मार्ता इव भवेद्** यदि इति – अनारभ्याधीताः अप्रकरणाम्नाताः, कस्मिंश्चित् प्रकरणे न आम्नाताः, न पठिताः स्मार्ताः धर्माः इव! यदाहि अनर्था धर्मजिज्ञासा यदि भवेत्, तदा तैः विचारः किमर्थं कृतः ? तत्र **महतां** जैमिन्यादीनां स्वभावः एतादृगेवेति तद्वशतः कृता धर्मप्रक्रिया. धर्मनिरूपणं कृतम् इति. **प्रक्रिया च** निरूपणम्. **प्रक्रिया महतां** जैमिन्यादीनां धर्मप्रक्रिया वृत्तिः वर्तनम्. महतां वर्तनं किम् ? तत्र उच्यते धर्म**प्रक्रिया**एव इति. 'वृत्तिः' = वर्तने जीवने. जीवनं वर्तनं च धर्मकरणमेव इति अर्थः. **तेन** कारणेन **अत्र** धर्मे **स्वातन्त्र्यं न** धर्मप्राधान्यं नास्ति, तेषां स्वभाववशादेव धर्मविचारः इति ।।३०–३१।।

वेदस्य तत्र तात्पर्याभावेन मुख्यतया तत्प्रतिपादकत्वाभावात् पुरुषार्थपर्यवसानाद् वैदिकत्वशङ्का जायते इति चेत् तत्र आह **धर्मार्थकाममोक्षार्थं श्रेयः स्मार्तं भवति, न वैदिकं** पुरुषार्थपर्यवसानत्वाभावात् न वैदिकत्वम्. परमात्मविचारसहिताः धर्माद्याः, पुरुषेक्षा – ईक्षा = सङ्कल्पः सच इच्छारूपइति– पुरुषेच्छाविषयत्वेनैव, साध्यसाधनादिभावं कर्मकरणभावं प्राप्ताः. धर्मसाधनम् अर्थः साध्यएव मोक्षपर्यन्तम्. तत्रच साध्यत्वस्यैव अन्वयो योग्यताबलात्. पुरुषप्रयुक्तैव योग्यतेति कर्मणः फलं तदिष्टत्वेनैवेति, पुरुषेच्छाविषयत्वेनैवेति, स्मार्ताः. न[!?] इति प्रमाणान्तरगो नहि. परमात्मविचारेण ''अथातो ब्रह्मजिज्ञासा'' (ब्र.सू.१।१।१) इति परमात्मविचारत्वेन चत्वारो **अलौकिकाः** भवन्ति परन्तु स्मार्ताः एते भिन्नाः भवन्ति; वैदिकास्तु भिन्नाः. यथा ''तं त्वौपनिषदं पुरुषम्'' (बृ.उ.३।९।२६) इति उपनिषन्निरूपितमेव ब्रह्म भवति. तद्विचारेणैवच यथा वेदोक्तब्रह्मज्ञानेन

**धर्मे ब्रह्मणि च प्रोक्ताः फलत्वेन तथैव ते।**
**अथ वेदाध्ययनं ब्रह्मचर्ये वेदान्ताध्ययनं च संन्यासइति**



**तद्विचारः पृथगेव. समाप्तिश्च श्रूयते शिक्षायां – ''वेदमनूच्य आचार्यो अन्तेवासिनम् अनुशास्ति'' (तै.उ.१।११।१) इत्यादिना; उपनिषद् अनन्तरं पठिता. * आचार्यन्तरेऽपि नैव उत्तरकाण्डाध्ययनं...... *[1] आचार्यान्तरेऽपि गुणोपसंहारन्यायेन पूर्वकाण्डाध्ययनमेव ब्रह्मचर्ये, न उत्तरकाण्डस्य. सौकर्यार्थमेव पाठान्तरम् इदानीम्. विचारस्तु पश्चादेवेति न एकवाक्यता. अतएव विचारोऽपि पृथगेव.**

---

तत्त्वविवेक

तदुक्तं फलं भवति तत्तु[नतु!] स्मृत्यादिनिरूपितब्रह्मविचारेण. तत्तु भिन्नं तत्र भिन्नं भवति [!?]इति भाष्योक्तत्वात्. वेदविचाराद् अन्यविचारेण सिद्धम् अन्यदेव तद् भवति, नतु वेदोक्तं ब्रह्म ''तं त्वौपनिषदम्'' (बृ.उ.३।९।२६) इति श्रुतेः केवलोपनिषद्विचारवेद्यत्वाद् ब्रह्मण–इति. धर्मसहिते **ब्रह्मणि प्रोक्ताः धर्मे ब्रह्मणि** वा इति अर्थः.[2]......चतुष्टयो भेदः – फलभेदो विषयभेदो अधिकारिभेदो अनुबन्धभेदः च इति. प्रतिपाद्यप्रतिपादकभावसम्बन्धः......[3] पूर्वकाण्डस्य अप्राधान्यख्यापनार्थं फलैक्यभावप्रतिपादनार्थं ब्रह्मविचारप्राधान्यबोधनार्थं ब्रह्मविचारभेदः पृथग् निरूप्यते इति ।।३२–३३।।

तत्र अधिकारिभेदम् आहुः **अथ** इत्यादिना. वेदस्य **समाप्तिः ''वेदम् अनूच्य''** इति, आचार्यत्वं वेदसमाप्तौ, **ब्रह्मणि** विषयेतु आचार्यत्वं न, तत्र वेदस्य उपयोगाभावात् किन्तु वेदान्तानाम् इति. एवञ्च वेदे अधिकारिभेदो ब्रह्मविचारे च अधिकारिभेदो, वेदस्य पश्चाद् उपनिषदः पठितत्वाद् वेदसमाप्त्यनन्तरं पठिता इति अर्थः. यद्यपि शाखान्तरे ''वेदम् अनूच्य'' इति वाक्याभावः, आचार्यत्वरूप–फल–श्रवणाभावः, तथापि ब्रह्मविचारेण न वेदाध्ययनम्. एवकारेण आचार्येण न वेदान्ताध्ययनं कथं ''वेदम् अनूच्य'' इति समाप्त्या आचार्यो

---

१. चिह्नान्तरितः कश्चन वाक्यांशो अत्र त्रुटितः इति सम्भावना.

२. अत्र काचन त्रुटिः ३. इहापि काचन त्रुटिः प्रतिभाति.

**''साङ्गोपनिषदः'' (    ) इति पृथक् पुराणेषु निर्देशः इति.**

**अथवा कुत्रापि आश्रमे विचारो अस्तु, न एकवाक्यता. न वेदत्वम् उपनिषदाम्. स्वरादिनियमः तदन्तानामपि आचारपरम्परया. वाक्येनतु उपयोगः ''यदेव विद्यया करोति'' (छा.उ.१।१।१०) इति. तथापि कथम् उपयोगः इति चेद्, उच्यते –**

---

तत्त्वविवेक

भवतीति वेदसमाप्तिः अत्र श्रुताः. एतस्य उपसंहारः **आचार्यान्तरेऽपि नैव उत्तरकाण्डाध्ययनं**[1] शाखान्तरीयवाक्यान्तरे न उत्तरकाण्डाध्ययनं ब्रह्मचारिणः. श्रूयमाणो गुणः आकाङ्क्षावद् अन्यत्रापि गच्छतीति **गुणोपसंहारन्यायो** ब्रह्मचारिणो वेदान्ताध्ययनं सौकर्यार्थमेव. वेदपाठाद् अन्यः **पाठान्तरम् इदानीं** भवतु नाम पाठे बाधकं किमपि नास्ति. वेदान्तविचारस्तु पश्चात् संन्यासे इति अर्थः. **इति न एकवाक्यता** एकाधिकारिकत्वलक्षणा एकवाक्यता नास्ति, भिन्नाधिकारिकत्वाद्, वेदान्तविचारस्य. पूर्वोक्तन्तु **सकलस्य वेदस्य [एकार्थ!]परत्वं वर्ततएव** इति, एकार्थत्वलक्षणैकवाक्यत्वं वर्ततएव इति. अत्रतु एकाधिकारिकत्वलक्षणैकवाक्यत्वं नास्ति इति भावः. अतएव एकाधिकारिकत्वलक्षणैकवाक्यत्वाभावो वा इति[!?] अतएव इत्येतस्य अर्थः. **वेदान्तविचारोऽपि पृथगेव** भिन्नएव आश्रमान्तरएव कर्तव्यः इति अर्थः. संन्यासे इति यावत्. ''साङ्गो वेदो अध्येतव्यः'' इदं [वचनं!] वर्तते, ततः पृथक्कृत्य निर्देशो वेदान्तानां 'साङ्गोपनिषद्' इति, वेदान्तानाम् 'उपनिषत्'शब्दप्रतिपादितानां वेदात् पृथक्तया निर्देशः इति. द्वितीयः पक्षः **कुत्रापि आश्रमे वेदान्तविचारो अस्तु** तथापि पूर्वकाण्डेन **समं न एकवाक्यता,** भिन्नप्रयोजनवत्त्वाद् इति. वेदस्यैव स्वरनियमइति वेदत्वाभावे स्वरादिनियमः कथम् ? तदन्तानां वेदान्तानाम् अध्यापक**परम्परया** ''यदेव...'' इत्यनेन वाक्येन उपनिषदां पूर्वकाण्डे उपयोगः इति अर्थः. यज्ञीयाः पदार्थाः सर्वे

---

१. अयमंशो मूलप्रतीकः मूले त्रुटितो वा प्रक्षिप्तो वा प्रामादिको वा अन्यथैव वा इति न बुध्यते !

**लौकिकेषु पदार्थेषु साङ्गो यज्ञो अध्यस्यते, वैदिके तत्र अर्थे वैदिकता सम्पद्यतइति; ब्रह्मवादेन सर्वस्यापि ब्रह्मत्वे अवगते ब्रह्मण्येव यज्ञः प्रतिष्ठितोऽपि भवति. अयज्ञकालेऽपि वैदिकत्वं सिद्ध्यति.**



**ननु तच्च वेदान्तत्वं कथं ?**

**(उपसंहारः)**

**श्रीकृष्ण[स्य!]प्रसादेन मायावादो निराकृतः।।३४।।**
**अवैदिको महादेवः तत्र साक्षी न संशयः।**
**ये वैदिकाः महात्मानः तेषां चानुमतिस्तथा।।३५।।**

---

तत्त्वविवेक

**लौकिकाः** दध्यादयः, तेषु **साङ्गो** वैदिको **यज्ञो अध्यस्यते** ब्रह्मात्मकत्वेन अध्यस्यते, लौकिकाः पदार्थाः एतएव अङ्गभूताः इति अध्यासः. तत्फलन्तु वेदे अभेदे(दो!) विभाव्यते – '' यज्ञो अयमेव''इति – एतत्प्रकारकएवेति वैदिकः. नाम वैदिकपदार्थे यज्ञीयाः पदार्थाः वैदिकाः इति. तत्र अर्थो वैदिकः यस्य त[स!]द्भावो नाम वास्तववैदिकार्थत्वं सम्पद्यते, अनध्यस्तवेदार्थत्वम् इति यावद्, वैदिके पदार्थे वास्तववैदिकार्थत्वं सम्पद्यते. वेदेऽपि अलौकिकत्वेन वेदार्थविभावनमिति उपनिषदाम् अयमेव विनियोगः इति ब्रह्मात्मकत्वाद् **ब्रह्मणि प्रतिष्ठितो भवति.** ''ब्रह्मात्मकएव यस्य[ज्ञः!]'' इति ज्ञानं यज्ञकालाभावेऽपि ब्रह्मात्मत्वविधानाद् वैदिकत्वं सिध्यति न लौकिकत्वमिति.

**ननु तच्च वेदान्तत्वं कथम् ?** इति प्रश्नः. अथवा उपनिषदां मायावादप्रतिपादकत्वं तच्च वेदान्तत्वं कथं ? नतु [न!?] कथञ्चिचिदपि इति भावः. एतावता परमतं दूषितम्.

**श्रीकृष्णप्रसादेन मायावादस्तु अवैदिको निराकृतः,** तत्र निराकरणे **अवैदिकत्वं** हेतुरिति तदेव हेतुत्वेन उपन्यस्तम् इति ज्ञेयम्. अवैदिको वेदप्रतिपाद्यो न भवति इति अर्थः. विश्वेश्वरः, यस्तु देवेषु महान् स **साक्षी** भवति भगवांस्तु देवाधिदेव–इति, सदसद्विवेकतया मध्यस्थः साक्षी

**अवेदविद् न मनुते मया चोपेक्षितः पुनः।**

---

तत्त्वविवेकः

भवति. अस्मिन् अर्थे सर्वथैव प्रामाण्यार्थम् उक्तं **न संशयः** इति. लोके चापि

सज्जनानाम् अनुमतिम् अन्तरेण तन्निराकरणासम्भव-इति **तेषां** महात्मनाम् अनुमतिम् अत्र अर्थे दर्शयन्ति. स्वस्य सर्वथा तत्त्वख्यापनाय **तेषां च अनुमतिः तथा** इति, **तेषां** वैदिकानां महात्मनाम् अनु पश्चात् मतिः, महादेवस्य साक्षित्वदर्शनेन **तदनु** महादेवसाक्षित्वदर्शनाद् अनु. तथा नाम मायावादे अवैदिकत्वेन निराकरणकरणे मतिः यथार्थवेदार्थबुद्धिः वर्तते इति अर्थः. अथवा **ये वैदिकाः,** ये इति प्रसिद्धाः विरलाः वेदार्थवक्तारो वेदविदो महात्मानः - भगवन्माहात्म्यम् अनिशं वेदार्थपरिस्फुरणाद् हृदि आगतं भगवत्कृपयेति यथोक्तवेदार्थविदः - तेषामपि **अनुमतिः** सम्मतिः. तथा नाम निराकरणे इति अर्थः. एतेन पाषण्डिनां मायिनां वेदार्थवचनेन भगवन्माहात्म्यास्फुरणाद्, यथार्थवेदार्थज्ञानाभावेन अन्धन्तमोरूपमेव तेषान्तु फलमिति तद्बुद्धित्वात् मायावादो हृदये भासत-इति भगवत्कृपाविशिष्टानां यथार्थवेदार्थस्फुरणाद् भगवन्माहात्म्यज्ञानाद् ब्रह्मवादएव सदा स्फुरतीति तन्निराकरणं तेषां महात्मनां स्वनिराकरणम् उचितमेव सति भावः. एतेन महादेवानुमत्या वैदिकानां च अनुमत्या तन्निराकरणं कृतं नतु स्वतः इति भावः. एतदाशयस्फुरणायैव **महात्मा** इति पदम् उपात्तम्. एतेन **'महादेव'** पदमपि तथा आशयेनैव निरुक्तमिति ज्ञेयम्. इतरथा अन्यदेवनाम उक्तं स्यादिति ।।३४-३५ ।।

**अवेदवित् न मनुते** इति, नतु वैदिकभिन्नकेवलमायी अत्याग्रही मायमतं दृढीकर्तुम् उद्युक्तः तन्निराकरणं [न!?] अग्रे **डिण्डिस्तु वादितो द्वारि विश्वेस्य मया** इति उक्तत्वात्. मायावादनिराकरणं ब्रह्मवादस्थापनं च; इदं पत्रावलम्बनं च एतत् सर्वं विश्वेश्वरद्वार्येव तत्साक्षितयैव तदग्रे सर्वं काश्यां जातं कार्यम् इति ज्ञाप्यते, वस्तुतस्तु तत्र साक्षित्वेन प्रकटमिति. ननु चेत् तर्हि तत्र दोषारोपेण स्वबुद्धेरपि नाशप्रसक्तिः इति आशयेन आहुः **मया च उपेक्षितः** इति. अथवा स्वयमपि आग्रहवान् भवेत् न वा ! इति आशङ्कायां न इति आहुः मया च उपेक्षितः इति. एवञ्च तेन समं निर्वचने स मा मनुतां, का वा अस्मत्क्षतिः ! यतः

**स्थापितो ब्रह्मवादो हि सर्ववेदान्तगोचरः ।।३६ ।।**

---

तत्त्वविवेकः

**स अवेदवित्** वेदार्थज्ञानं तस्य यतः नास्तीति. एवञ्च वेदबाह्यत्वेन तेन समं कलहो अत्याग्रहश्च न कर्तव्यः, किन्तु भगवद्भक्तैः तत्कृपया वेदार्थविद्भिः स उपेक्ष्यएव, असम्भाष्यएव. अतः तत्सह न सम्भाषणं, तेन केवलं वेदविरुद्धतर्कनिरूपणे कृते तत्सङ्गेन स्वस्यापि असन्मताभिनिवेशेन भगवद्भक्तिः स्वस्माद् अपह्रियेत



इत्यतो जन्मवैयर्थ्यमेव भवेदिति.

अतो भगवद्भक्तैः वेदबाह्यो बहु असम्भाष्यएव इति भावः. यतो अस्मन्मार्गो हि वैदिको वेदविद्भिरेव मान्यो मन्तव्यः. तत्र अन्यो अवेदविन् मनुतां वा मा वा मनुतां, का तत्र विचारणा ! इति; यतः सच उपेक्ष्यएव इति भावः. ननु मायामतं निराकृतं वेदबाह्यश्च उपेक्षितः, एतावता स्वमते किं स्थापितम् ? इति आकाङ्क्षायाम् आहुः **स्थापितो ब्रह्मवादो हि** इति, असदालापेन तेन समं वल्गनेन न किञ्चित् प्रयोजनमिति तत्र उपेक्षां कृत्वा ब्रह्मनिश्चयेन **सर्ववेदान्तगोचरः** प्रसिद्धो **ब्रह्मवादः** स्थापितो मया इति शेषः. पूर्वं निरुक्तएव, तस्यैव **स्थापितः** इत्यनेन सह अन्वयः. ब्रह्मवादस्थापनेन प्रमाणमूर्धन्यवेदान्तस्यैव मानत्वेन ब्रह्मवादस्यापि मायावादा!]दिनः[दितः!] सर्वमूर्धन्यत्वं द्योतितम्. अतो ब्रह्मवादाद् आधिदैविकात् सर्वे अपकृष्टाः वादाः हीनाधिकारिणो यथाकथञ्चिद् बोधनार्थम् उक्तत्वाद् इति भावः. हि युक्तश्च अयम् अर्थः, तत्र उपेक्षां कृत्वा एतत् प्रमाणमूर्धन्य-प्रसिद्धब्रह्मवाद-स्थापनम् उचितमेव, युक्तत्वादिति. सर्ववेदान्तगोचरः इत्यनेन मायावादस्तु अवैदिकएव प्रथमतो वेदे कुत्रापि न प्रतिपादितः. ब्रह्मवादस्तु सर्वेष्वपि वेदान्तेषु प्रसिद्धः, सर्वप्रमाणमूर्धन्यो यत्र वेदएव, प्रथमतः, तन्मूर्धत्वाद् वेदान्तानाम्. अतः वेदप्रमाणमूर्धन्य-सर्ववेदान्तप्रसिद्धो नतु यत्किञ्चिद्वेदान्तप्रसिद्धः इति. ब्रह्मवादस्यापि प्रसिद्धतमत्वम् अतिमायिकतमत्वं च इति भावो अवगन्तव्यः. एतेन अयं वादोऽपि सुप्रसिद्धतयैव स्थापितः इति ज्ञातव्यम्. अतएव अग्रे वदिष्यन्ति **डिण्डिस्तु वादितो द्वारि** इति, दैवानामेव अयं वादो न असुराणां तेषान्तु मायावादादिः. अतः तेषामेव एतद्द्वारस्थापनेन परमसन्तोष-इति महादेवसन्तोष प्रार्थयन्ति.

**काशीपतिस्त्रिलोकेशो महादेवस्तु तुष्यतु ।**
**कस्यचित्त्वथ सन्देहः स मां पृच्छतु सर्वथा ।।३७ ।।**

---

तत्त्वविवेकः

यतः काश्यामेव एषो वादः स्थापितः तस्मात् काशीपतौ प्रसन्ने सर्वैव सा [देवता] प्रसन्ना स्यादिति तथेति. पूर्वं देवताप्रसन्नता अपेक्षिता तत्प्रसन्नतयैव

लोके तत्कार्ये सुदृढसंस्थापनम्. काश्याञ्च सएव अधिपतिः देवइति. स्वयं यद्यपि ईश्वराः तथापि भूमौ दैवोद्धारार्थम् इति पूर्वं निरुक्तम्. **श्रीकृष्णप्रसादेन** इति, तत्संबन्धः **स्थापितो ब्रह्मवादो हि** इत्यन्तं ज्ञेयः.

सन्मनुष्याकृतिद्विजरूपत्वेन प्रकटितत्वेन ''लोकवत्तु लीलाकैवल्यम्'' (ब्र.सू.२।१।३३) इति लोकन्यायेन तया[था!] अवतारकार्यतया महादेवतोषप्रार्थनमपि न अनुपपन्नं किन्तु प्रसङ्गादानुषङ्गिकतया उक्तम्– ''एतत्स्थापनेन काशीपतिः त्रिलोकेशः प्रसन्नो भवतु'' इति. ब्रह्म हि देवाधिदेवाख्यं पुरुषोतमाख्यं तद्वादस्थापनेन देवेषु महादेवः तत्प्रसन्नत्वप्रार्थनम् उचितमेव. ब्रह्मवादस्थापनेन सर्वेषां सत्यत्वनिरूपणात् सर्वे देवाः सत्यतया तत्स्थापिताः जाता– इति देवानामपि तोषहेतुः स वादो भवत्येवेति महादेवप्रसन्नत्वप्रार्थनं, साक्षी प्रसन्नः कर्तव्य–इति. अत्र हि ''सिद्ध–साध्य–समभिव्याहारे सिद्धं साध्याय उपयुज्यते''– '' मलिनं ते वपुः स्नाया !'' इत्यत्र इव सिद्धस्य ब्रह्मस्थापनस्य असिद्धमहादेवतोषहेतुत्वं ज्ञेयम्. स्थापितो ब्रह्मवादः इति उक्त्वा तदनुपदमेव काशीपतितोषहेतुत्वप्रार्थनं निरुक्तमिति एतादृक्पदसमभिव्याहारवशादपि तद्धेतुत्वम् अध्यवसेयम्. अन्ततो गत्वा पर्यवसानतः पूर्वोक्तमेव फलति. अत्र एवं ज्ञेयं–१**'स्थापितो'** २**'ब्रह्मवादः'** ३**'सर्ववेदान्तगोचरः'** इति पदत्रयसाम्याद् अत्रापि पदत्रयम् उपात्तं १**'काशीपतिः'** २**'त्रिलोकेशो'** ३**'महादेवः'** इति. स्थापितः काश्याम् अथवा सर्वत्र, अतः कारणात् काशीपतिः तुष्यतु, काश्यामेव पतित्वेन स्थापनात्. ब्रह्मवादः–तच्च ब्रह्म '''ॐ'इति एकाक्षरम्'' (भ.गी.८।१३) अश्च उश्च मश्च इति ॐ सच्चिदानन्दात्मकं च तद् भवति अतः कारणात् त्रिलोकेशः स्वर्गमृत्युपातालेशः सात्त्विकादिगुणेशो वा तुष्यतु. सर्ववेदान्तगोचरो महाप्रसिद्धो भवति अतः कारणात्. ''महादेवः स प्रसिद्धः तुष्यतु''इति आशयेन पल्लवोक्तिः विज्ञेया. अथ ब्रह्मवादस्थापनानन्तरं

**न भयं तेन कर्तव्यं ब्राह्मणानामियं गतिः।**
**डिण्डिस्तु वादितो द्वारि विश्वेशस्य मयात्र हि।।३८।।**
**विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः।**

**।।इति श्रीमद्वल्लभाचार्यविरचितं पत्रावलम्बनं सम्पूर्णम्।।**

---





यस्य **कस्यचिद्** ब्राह्मणजातिविशिष्टस्य **सन्देहः** स्याद् भवति वा **स मां सर्वथा पृच्छतु !** तेनतु मया सह प्रश्ने ''एते महान्तः ईश्वराः सर्वज्ञाः क्व ! क्वच अहं स्वल्पविद्यो जीवः !!'' इत्यादिकं **भयं न कर्तव्यम्.** यतो **ब्राह्मणानां** ब्रह्मवादविषयकप्रश्ने **इयमेव गतिः** आश्रयः प्राप्यं स्थानम् इति यावत्.

ननु भवद्भिः कक्षा कुत्र स्थले निवेशप्रश्नः कर्तव्यः कुत्र वा समागमनम् ? इत्यतः आहुः **डिण्डिस्तु [इति!]. अत्र** काश्यां **विश्वेश्वरस्य द्वारि मया डिण्डिस्तु वादितः.** अन्यत् मया किं करणीयम् ! डिण्डिवादनेऽपि चेत् न श्रवणं तदातु मम दोषो नात्र दीयताम्. आयान्तु चेत् प्रष्टुम् आगच्छन्तां, मया अत्र समाधानं कार्यम् इति भाव. अतः कारणाद् **विद्वद्भिः सर्वथा श्राव्यं** श्रवणीयम्. तद् इदं पत्रावलम्बनं तैः कथं श्रवणीयं किं वा तत्र तेषां प्रयोजनम् इति आकाङ्क्षायाम् आहुः यतो युक्तमेव तद्रक्षणं यतोहि विद्वत्त्वात् **तेहि सन्मार्गरक्षकाः** भवन्ति; अतः तैः श्रवणे कृते सन्मार्गस्य रक्षणं जायत–इति. असन्मार्गस्य दूरीकरणं सिध्यतीति तैः अवश्यं श्राव्यम् इदं पत्रावलम्बनम्. यतः सन्मार्गश्रवणेनैव तद्रक्षणं सिद्धं भवति. श्रुतेहि तस्मिन् समादरणेनैव सतां तद्रक्षणं सम्भवति नतु अश्रुते. अतोहि सन्मार्गश्रवणस्य आवश्यकता द्योतिता. पश्चाच्च तस्मिन् मनसि समागते तद्रक्षणमपि सिद्धं भूतमिति किम् अन्यद् अवशिष्यते इति सर्वं रमणीयमेव इति।।३६–३८।।

**इत्याकृते निजाचार्यैः कृते पत्रावलम्बने।**
**कृतस्तत्त्वविवेकोऽयं विद्वज्जनमनोमुदे।।१।।**
**मया गिरिधरेणासौ तदनुग्रहसाधनात्।**

---

तत्त्वविवेकः

समाकलय्य बहुशो नितरां तद्विभावनात्।।२।।
एतेन सततं श्रीमद्वल्लभाधीशविट्ठलौ।
प्रसीदतां कृपालुत्वात् स्वदासे सततं मयि।।३।।
स्वाचार्यैः रचिते काश्यां विश्वेशे सति साक्षिणि।
तद्द्वारि स्थापिते सम्यक् श्रीमत्पत्रावलम्बने।।४।।
स्थापिते ब्रह्मवादे हि सर्ववेदान्तगोचरे।

मया गिरिधरेणेदं तदनुग्रहसाधनात्।।५।।
समाकलय्य नितरां सततं तद्विभावनात्।
कृतस्तत्त्वविवेकोऽयं भूयाद्विद्वन्मनोमुदे।।६।।
मायामते निरसिते श्रुत्यनुक्ते सदुक्तिभिः।
स्थापिते ब्रह्मवादे हि सुस्थिरे श्रुतिगोचरे।।७।।
भूमौ तद्विजये सिद्धे परास्तेषु च वादिषु।
मया गिरिधरेणेदं तदनुग्रहसाधनात्।।८।।
एतेन नितरां श्रीमद्वागधीशाः स्वयं मुदा।
कृपयन्तु कृपालुत्वात् स्वदासे सततं मयि।।९।।

इति श्रीविट्ठलेशात्मज-श्रीगिरिधरेण विरचितो विद्वज्जनमनोमोददायकः पत्रावलम्बनतत्त्वविवेकः सम्पूर्णः



**श्रीमद्वल्लभाचार्यमहाप्रभुप्रणीताः**

# ।।पूर्व-मीमांसा-भाष्य-कारिकाः।।

**श्रीमत्पुरुषोत्तमानां विवरणेन संवलिताः**

**श्रीकृष्णाय नमः**

**श्रीमदाचार्यचरणकमलेभ्यो नमः**

अथ श्रीमदाचार्यचरणाः *पूर्वमीमांसाभाष्यं चिकीर्षन्तः - तत्र विस्तरेण प्रतिपिपादयिषितं जिज्ञासासूत्रार्थं सङ्क्षेपेण कारिकाभिः सञ्जिघृक्षन्तः - शास्त्राधिकरणोक्तायाः धर्मजिज्ञासायाः अनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्तिसिद्ध्यर्थं वक्तुं; तद्द्वारा तस्याः आवश्यकतां च प्रतिपादयितुं, वैदिको निर्णयो न लोकरीत्या सिद्ध्यतीति बोधनाय* प्रथमं लौकिक-वैदिक-मार्गयोः भेदं व्युत्पादयन्ति -

**लौकिको वैदिकश्चैव मार्गो नित्यो द्विधा मतः।**
**प्रवाहेण स्वरूपेण नित्यत्वं च तयोः क्रमात्।।१।।**
**अर्थः प्रधानं लोके हि शब्दोऽन्यस्मिन्निति स्थितिः।**

**लौकिक**ः इत्यादिसार्धेन. मार्गः फलप्राप्ति-साधन-परम्परा. तथाच **स्वरूप**भेदात् प्रवाहभेदात् च भेदः इति अर्थः।।१।।

लोकरीत्या कुतो न वैदिकनिर्णयः! इति आङ्काक्षायां तयोः विरुद्धत्वं व्युत्पादयन्ति -

**जलाग्न्योरिव संरक्षा तयोः कार्या मनीषिभिः।।२।।**
**लोको[१] जलं द्वितीयस्तु दहनो वैरिणौ मिथः।**
**लोकदृष्ट्या यदा वेदः स्पृश्यते नाशमेति हि।।३।।**

---

१. 'लोके' इति मुद्रितपाठस्तु मुं.वि.पाठानुसारेण संशोधितः.

**जलग्न्योः** इत्यादि **हि** इत्यन्तेन. अत्र जलाग्निदृष्टान्तो जन्य-जनक-भावेऽपि नाश्य-नाशक-त्वस्य प्रबल-निर्बल-भावस्य च बोधनाय. **स्पृश्यते** इति गृह्यते. संयोगाख्यस्पर्शस्य सर्वत्र व्यापारत्वाद् एवम् उक्तम्. **नाशश्च,** लौकिकवाक्यतुल्यतायां, तदर्थे अविश्वासेन स्वकार्याक्षमत्वरूपः, क्वचिद् विप्लवरूपः च; अयोग्यतादिभानेन अन्यथार्थकल्पनरूपश्च बोध्यः. तेन प्रवाहभेदात्[१] न लौकिकरीत्या वैदिकनिर्णयः इति बोधितम्।।२-३।।

अतः परं यथा निर्णयो भवति तं प्रकारं वक्तुं तत्परिकरम् आहुः-

**लौकिकं सहसा वेदो नहि बाधितुमर्हति।**
**यथा पात्रव्यवहितं वह्निना शुष्यते जलम्।।४।।**
**तथाधिकारिचित्तस्थो लोको वेदेन शुष्यति।**

**लौकिकम्** इत्यादि. अत्र **अधिकारिचित्तस्थः** इत्यनेन वासनात्मको बोधितः. तेन, बाह्यस्य तस्य प्रवाहनित्यतायाः न भङ्गो; बाध्यबाधकभावः च उपपन्नः, इति बोधितम्. तेन प्रथमस्तु अधिकारिपरिकरः इति बोधितम्।।४।।

तत्स्वरूपबोधनाय फलं विवेचयन्ति-

**धर्मार्थकाममोक्षाख्याः वर्णिनां प्रतिलोमतः।।५।।**
**नियताः पूर्वभावी तु पराङ्गं सति निश्चितम्।**
**सतः शूद्रस्य नार्थाद्याः मोक्षो हि ब्राह्मणे स्थितः।।६।।**
**धर्मार्थकामैः साध्यः स नान्यथा ब्रह्मता भवेत्।**
**सेवाधर्मस्तु शूद्रस्य नान्यो ह्युत्तरसाधकः।।७।।**
**अर्थादिसाधको धर्मो वर्णिनामिति निश्चयः।**
**तत्रापि वैदिको धर्मो मोक्षान्तो ब्राह्मणे स्थितः।।८।।**

---



१. 'प्रधानभेदात्' इति मुद्रितपाठस्तु प्र. पाठानुसारेण मूलानुरोधेन च संशोधितः.

**मोक्षे[१] हि लौकिकः शुष्येदतो वेदस्य तत् फलम्।।**
**फलं सुखं तस्य काष्ठा ब्रह्मानन्दः इति स्थितिः।।९।।**
**सच्चिद्रूपं च तत्रेति[२] केचित्तत्रैव संस्थिताः।**
**गृहस्थानामतिथिवद् गृहस्था इव केचन।।१०।।**

**धर्मार्थ...** इत्यादिभिः सार्धैः पञ्चभिः. **वर्णिनां** *वर्णो ब्राह्मणत्वादिनामा देवता-विशेषः इति ''ब्रह्माननः क्षत्रभुजः'' (भाग.२।१।३७) इत्यत्र सुबोधिन्यां स्थितं, तदधिष्ठितानां* **प्रतिलोमतः** शूद्र-वैश्य-क्षत्रिय-ब्राह्मणाः इति प्रतिलोमक्रमतः, **धर्मार्थकाममोक्षाख्याः** पुरुषार्थाः **नियताः,** ब्राह्मणस्य दैववर्णत्वात् -शूद्रस्य असूर्यत्वाद्- अन्ययोः तारतम्येन सङ्कीर्णत्वात् -तत्तत्प्रकृत्यनुसारेण अभीष्टतया लभ्यतया **च** व्यवस्थिताः. **तु** पुनः, एतेषु यो-यः **पूर्वभावी** पुरुषार्थः स-सः, **सति** समीचीने अधिकारिणि, पराङ्गं तुरीयपुमर्थाङ्गम् इति **निश्चितं** वेदपुराणादिभ्यो निर्णीतम्. तेन मोक्षएव परमं फलम्.

किञ्च यः **शूद्रेषु सन्** पूर्वसंस्कारेण उत्तमबुद्धिः मुमुक्षुः तस्य, न अर्थाद्याः अपेक्षिताः किन्तु मोक्षो अपेक्षितः. अतो असूर्यस्यापि, सत्त्वे यदा तदाकाङ्क्षा, तदा तस्य फलत्वे किं वाच्यम्!

किञ्च **मोक्षो हि** निश्चयेन **ब्राह्मणे स्थितः** तस्यैव तत्र स्वरूपयोग्यता-सद्भावाद् निर्णीतः. अन्येषान्तु **धर्मार्थकामैः सः ब्राह्मणदेहः साध्यः.** अन्यथा तेषां त्रिवर्ग-पर्यवसित-मतित्वे **ब्रह्मता** ब्राह्मण्यं जन्मान्तरे **न भवेत्.** तथाच यदधिकारस्य एवम् उत्कृष्टता तस्य फलस्य उत्कृष्टत्वे किं वाच्यम् इति अर्थः. नच वैदिकधर्मेषु अनधिकृतस्य शूद्रस्य आकाङ्क्षिततया कथं मोक्षस्य उत्कृष्टत्वम्? इति शङ्क्यं, ''पद्भ्यां भगवतो जज्ञे शुश्रुषाधर्मसिद्धये तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः'' (भाग.३।६।३३) इति, ''शुश्रूषणं द्विजगवां देवानां चाप्यमायया तत्र लब्धेन सन्तोषः'' (भाग.११।१७।१९) इति पुराणोक्त**सेवाधर्मः** तस्यापि उत्तरस्य

---

१. 'मोक्षो' इति मुद्रितपाठस्तु विवरणानुरोधात् संशोधितः.

२. 'तच्चेति' मुद्रितः पाठः संशोधितो मुं.वि. पाठानुसारेण विवरणानुरोधेन च.

मोक्षस्य **साधकः** इति पुराणेषु सिद्धत्वाद्.

किञ्च यः पुनः **अर्थादिसाधको धर्मः** ''स्वर्गकामो ...यजेत'' (आप.श्रौ.सू.१०।२।१) इत्यादिश्रुत्या बोधितः सः वर्णिनां मुमुक्षाशून्यानां साधारणानाम् **इति** तत्तद्वाक्याद् **निश्चयो** नतु महावाक्याद्. अतः तत्रापि अवान्तरवाक्येऽपि महावाक्यानुरोधाद् ''एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च कर्तव्यानि'' (भ.गी.१८।६) इति गीतास्मृत्युपबृंहणात् च **वैदिको धर्मो ब्राह्मणे मोक्षान्तो निश्चितः,** काममयस्य पुरुषस्य विश्वास-जननद्वारा चित्तशुद्धौ विचारोत्तरं मोक्षान्तो निर्णीतः. हि अतो हेतोः, मोक्षे **लौकिकः** त्रिवर्गः **शुष्येद्** असारतां गच्छेद्. अतो वेदस्य तत् मोक्षरूपमेव मुख्यं **फलम्.** तेन फलविचारो द्वितीयः परिकरः इति बोधितम्.

नच *सुखार्थं सर्वेषाम् आकाङ्क्षासत्त्वात् तदेव वाक्यशेषोक्तं मुख्यं **फलं मोक्षस्तु** निःसम्बोधो-निरानन्दइति स कथं फलम्? इति* शङ्क्यं, **फलं सुखम्** इति निर्विवादम्. **तस्य काष्ठा** पारम्यं **ब्रह्मानन्दः** इति स्थितिः ''एतस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति'' (बृ.उ.४।३।५२) - ''स एको **ब्रह्मण आनन्दः**'' (तै.उ.२।८) इत्यादि-श्रुतिसिद्धो निश्चयः. किञ्च तत्र ब्रह्मणि सच्चिद्रूपं च वर्तते ''सत्यं ज्ञानमनन्तं ब्रह्म'' (तै.उ.२।१।१)इति श्रुतेः. इति हेतोः केचिद् ऋषयः **तत्रैव** सच्चिद्रूपे **संस्थिताः** तदेव रूपं यावद्दुःखराहित्यात् फलत्वेन निर्णीतवन्तः. अतो निःसम्बोध-निरानन्दपक्षस्य श्रुत्यसिद्धत्वाद् असङ्गतत्वेन उक्तरूपो मोक्षएव मुख्यं धर्मस्य फलम्.

किञ्च **केचन** आनन्दाः **गृहस्थानां** सकामानां जधन्याधिकारिणाम् अतिथिवद् अनित्याः. **केचन गृहस्था इव** सार्वदिकाः. ते उभयविधाअपि धर्मफलभूताः।।५-१०।।

तेन सिद्धम् आहुः-

**अतः साधकपक्षस्तु मुख्यः साभिमतेर्महान्।**
**अतो धर्मस्य जिज्ञासा कर्तव्या सर्वथा द्विजैः।।११।।**
**जैमिनिः कर्मतत्त्वज्ञः प्रतिज्ञां तत् करोति हि।**



**अतः** इत्यादिसार्धेनः. **अतः साधकपक्षः** धर्मो मोक्षसाधकः इति पक्षो मुख्यः उत्कृष्टः, ''कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः अथापरे मनीषिणः कर्मभ्योऽमृतत्वामानशुः'' ( ) इत्यादिश्रुतेः, ''कर्मणैव हि संसिद्धिमास्थिताः जनकादयः'' (भ.गी.३।२०) इत्यादि स्मृतेः च अन्येषाम् अल्पानन्दत्वेन अमुख्यत्वात् च. यः पुनः ज्ञानशून्यत्वाद् देहादिषु दृढाध्यासपुरुषः तस्य **साभिमतेः महान्** पुष्कलकर्मकरणपक्षः. तथाच एवं फलानाम् अधिकारिणां स्वभावतारतम्यविचारः तृतीयः परिकरः इति अर्थः. **अतः द्विजैः** त्रैवर्णिकैः सकामैः निष्कामैः च फलसाधनीभूतस्य **धर्मस्य जिज्ञासा** विचारः **सर्वथा** कर्तव्यः. **तत्** तस्मात् **हि** निश्चयेन **कर्मतत्त्वज्ञो जैमिनिः** धर्मविचार-**प्रतिज्ञां करोति**. तथाच धर्मविचारः आवश्यकः इति अर्थः. एतेन अनुबन्धचतुष्टयं बोधितम्।।११।।

ननु स्वातन्त्र्येण धर्मविचारप्रतिज्ञा क्रियते उत विधिमूलकत्वेन? आद्येतु न विचारेण वैदिकफलसिद्धिः व्यधिकरणत्वात्. द्वितीयेन इतितु अयुक्तं, विचारे विध्यदर्शनाद् इति आशङ्कायाम् आदिमं पक्षं प्रथमतः समर्थयन्ति-

**स्वातन्त्र्येऽपि च संसिद्ध्येन्मीमांसायाः फलं महत्।।१२।।**
**पुराणपङ्क्तिपाठेन शिक्षाद्यङ्गेष्वपाठतः।**
**नैतावता लौकिकत्वं स्वरूपेण फलेन वा।।१३।।**
**वेदैकविषयत्वेन गुणतातु[1] प्रतीतितः।**

**स्वातन्त्र्ये...**इति द्वाभ्याम्. **महद्** इति वेदोक्तम्. याज्ञवल्क्येन - ''पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश'' (या.स्मृ.१।१।३) इति **पुराणादिषु पाठेन** तदपेक्षायाअपि धर्मे सत्त्वात्. यः पुनः चरणव्यूहे **शिक्षाद्यङ्गेषु अपाठः, एतावता न लौकिकत्वम्.** तत्र हेतुः **वेदैकविषयत्वम्.** ननु यदि एवं तदा चरणव्यूहे

---

१. प्र.पाठानुसारेण संशोधितोऽयं पाठः, 'गुणत्वात्तु' इति मुद्रितपाठस्तु अशुध्दः.

उपाङ्गतया गणनाद् गौणत्वं कुतः उक्तम्? इत्यतः आहुः गुणतातु प्रतीतितः इति उपाङ्गतया गौणता प्रातीतिकी मीमांसायाः अङ्गसापेक्षत्व-बुद्धिकृता नतु वास्तवी;

आराद् उपकारे वा संनिपत्य उपकारे वा, अङ्गतायाः अनपायाद् इति ।।१२-१३।।

अत्र आशङ्कते -

**तथापि वैदिकानां हि सन्तोषो नैव जायते ।।१४।।**
**वेदार्थमात्रकृतिनामप्रवृत्तिश्च सम्भवेत् ।**

**तथापि** इत्यादि ।।१४।।

तत्र प्रतिवादिनो मूर्खत्वं बोधयन्तः प्रकारान्तरेण समादधते -

**विचारानन्तरं ह्येवं तथाप्यत्याग्रहो यदि ।।१५।।**
**सन्देहवारकं[१] शास्त्रं तदैतत् सुविनिश्चितम् ।**

**विचार...** इत्यादि, वैदिकविषयत्वेन निवारिते वैयधिकरण्ये; समर्थितायां च अङ्गतायां यदि लौकिकत्वे गौणत्वे वा **आग्रहः, तदा** इदं **शास्त्रं सन्देहवारकं[२] सुविनिश्चितम्** इति हेतुगर्भितं विशेषणम्. तथाच सुविनिश्चितत्वात् सन्देहवारकत्वेन अङ्गतुल्यत्वात् न असन्तोषादिहेतुत्वम् इति अर्थः ।।१४-१५।।

ननु भवतु एवं तथापि न अङ्गतौल्यम् इति आशङ्कते -

**ऋषेरकौशलन्तु स्यात् फलतस्तुल्यता तयोः ।।१६।।**

१. 'सन्देहवारणं' इति प्र.पाठः.

२. 'सन्देहवारणं' इति प्र.पाठः.

**ऋषेः** इत्यादि. **तयोः** अङ्गमीमांसयोः **फलतः** सन्देहवारणरूपात् फलात्



तौल्यं, नतु स्वरूपतो, अङ्गवत् श्रुतौ अनुक्तत्वात्. अतः **ऋषेः** जैमिनेः, अ'विचारं विहाय पृथक्शास्त्रकरणे प्रवृत्तत्वाद् **अकौशलन्तु स्यात्**. तस्माद् अप्रयोजकम् इति अर्थः ।।१६।।

अत्र समादधते -

**स्वाध्याय[१] विधिमूलत्वं तदा ह्यस्य भविष्यति ।**
**सुष्ठ्वासमन्तादध्येयः स्वाध्यायो वेद उच्यते ।।१७।।**
**देशकालादिनियमात् निःसन्देहश्च सर्वतः ।**
**उपसर्गद्वयादर्थस्तथाध्येयो न चान्यथा ।।१८।।**
**पाठे ह्यर्थे ह्यनुष्ठाने शिक्षादीनां द्वयं-द्वयम् ।**
**वाक्यार्थस्यतु निर्धारो न शक्यस्तैः कथञ्चन ।।१९।।**
**अतो वाक्यार्थनिर्धारे मीमांसैव गतिर्भवेत् ।**
**निर्धारितं ततो ह्यर्थं महावाक्यैकगोचरम् ।।२०।।**
**स्वयञ्च गुरुतो ज्ञातं प्रतिज्ञायां करोति च ।**

**स्वाध्याय...** इत्यादि. तथाच एवं श्रौतत्वात् न उक्तदोषावकाशः इति अर्थः. तद् व्युत्पादयन्ति **सुष्ठु...** इत्यादि. **नियमाद्** इति 'ल्यब्'लोपे पञ्चमी.

तथाच -

देशकालादिनियमं विधाय अध्ययनं = सुष्ठुअध्ययनम्.

पाठार्थानुष्ठानेषु सन्देहराहित्यपूर्वकम् अध्ययनम् = आसमन्ताद् अध्ययनम्.

अयम् अर्थः **उपसर्गद्वयाद्** लभ्यते. अतः तदुभयपूर्वकम् अधीतो **वेदः स्वाध्यायो नतु अन्यथा. तत्र** पाठादिषु सन्देहवारकम् एवं द्वयं-द्वयम्.

१. पत्रावलम्बने ''स्वाध्यायोऽध्येतव्यः'' वचनस्य विधित्वास्वीकाराद्

'स्वाध्यायविधि...' इति पदप्रयोगः ''परप्रसिद्ध्यैव परो बोधनीयः''इति न्यायम् अनुसरति.

**तैः वाक्यार्थनिर्धारस्तु न** भवति, यथा ''अक्ताः शर्करा उपदधाति''[1] इत्यादौ. अतः तत्र **मीमांसैव** उपायः. तथाच स्वाध्यायविधिमूलतया स्वरूपतोऽपि श्रौतत्वेन अङ्गतौल्यात् न ऋषेः अकौशलम् इति अर्थः. सिद्धम् आहुः **निर्धारितम्** इत्यादि. ततो हि इति साङ्गात् सम्पूर्णाद् वेदादेव करोति विषयत्वेन वदति ।।१७-२०।।

प्रतिज्ञातस्य अर्थस्य वैदिकत्वं स्फुटीकर्तुं श्रुतिं तदुपबृंहणं च वदन्तः स्फुटम् आहुः –

**''यज्ञेन यज्ञमयजन्त देवाः**
**तानि धर्माणि प्रथमान्यासन्''[2]।।२१।।**
**''वेदप्रणिहितो धर्मो ह्यधर्मस्तद्-विपर्ययः''[3]।**
**''वेदोऽखिलो धर्ममूलम्''[4]इत्यादिश्रुतिभिः स्फुटम्।।२२।।**
**वेदार्थो धर्म एवेति स्वयं निश्चित्य सर्वतः।**
**जिज्ञासां प्रतिजानीते धर्मस्येति...............।।**

**यज्ञेन** इत्यादि **धर्मस्य** इत्यन्तम्।।२१-२२।।

**अत्र ''मीमांसाद्वयम् एकं शास्त्रम्''इति वादिनां मतम् आहुः –**

**........................ अथ केचन।।२३।।**
**''वेदएव द्विजातीनां निःश्रेयसकरः परः[5]''**
**अतस्तदर्थसंसिद्धौ सर्वं सेत्स्यति सर्वतः।।२४।।**
**''अथातो धर्मजिज्ञासा'' सूत्रमाद्यमिदं ततः।।**



**अथ केचन** इत्यादि. उक्तवाक्याद् यतः **एवम् अतः तदर्थस्य** वेदार्थस्य **संसिद्धौ** निर्विचिकित्से ज्ञाने सति **सर्वतः** कर्मभ्यो ज्ञानात्

१. तै.ब्रा.३।१२।५ इत्यत्र ''शर्करा अक्ता उपदध्याद्''इति पाठभेदेन. २.ऋ.सं.१०।९०।१६. ३.भाग.६।१।४०, ४.म.स्मृ.२।६, ५.या.स्मृ.१।२।४०.

**च सर्वं** पुमर्थचतुष्टयं **सेत्स्यति ततः** तदभिप्रायेण इदम् आद्यं सूत्रम् ''इति आहुः'' इति शेषः।।२३-२४।।

**एवं प्रतिज्ञाम् उपपाद्य सूत्रं व्याकुर्वन्ति –**

**शास्त्रारम्भेऽथशब्दस्तु श्रुत्या मङ्गलबोधकः।।२५।।**
**[1]अर्थान्तरे विकल्पो हि अधिकारे स्वतन्त्रता।**
**अथाधिक्रियते यस्माद् धर्मज्ञानात् फलं महत्।।२६।।**

**शास्त्र...** इत्यादि. हि यतो हेतोः श्रुतिमात्रेण मङ्गलं साधयति अतो **अर्थान्तरे** विशेषेण **कल्पनीयः**. तत्र अनन्तरारम्भार्थान्तरोपक्रममध्ये कुत्र कल्प्यः ? इति आकाङ्क्षायाम् **अधिकारे** आरम्भे कल्प्यः. तत्र हेतुः स्वतन्त्रता इति, शास्त्रस्य **स्वतन्त्रत्वात्**. तथाच पूर्वं कस्यापि अर्थस्य अनुक्ततया अर्थान्तरोपक्रमस्य अयोगेन, अध्ययनानन्तर्यस्य अर्थादेव प्राप्तेः, अधिकाकाङ्क्षापादकतया आनन्तर्यस्यापि ग्रहीतुम् अशक्यत्वेन अयुक्तत्वाद्. ''अथ शब्दानुशासनम्'' (पा.म.भा.१।१।१) इतिवद् अस्य शास्त्रस्य स्वातन्त्र्येण आरभ्यमाणतया अधिकारार्थग्रहणे 'स्वतन्त्रता'-एव हेतुः इति अर्थः. तद् आहुः **अथ अधिक्रियते** इति. 'अतः' शब्दार्थम् आहुः **यस्माद्** इत्यादि।।२५-२६।।

'जिज्ञासा' शब्दार्थम् आहुः –

**अतो धर्मावबोधाय विचारो योगरूढितः।**
**अध्याहारो न कर्तव्यो नाप्यर्थापत्तिकल्पना।।२७।।**

**विचारो योगरूढितः** इति. 'जिज्ञासा' शब्दो ज्ञानविषयिण्याम् इच्छायां यौगिको, विचारेतु ''अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेद्''

---

१. ''अर्थान्तरविकल्पो हि अधिकारे स्वतन्त्रताम् अर्थाधिक्रियते'' इति मुद्रितपाठस्तु प्र.-मुं.वि.पाठानुसारेण संशोधितः.

(भाग.११।१८।३८) इति पुराणप्रयोगाद् योहि ''धर्मं जिज्ञासितुम् इच्छेद्'' (शाब.भा.१।१।१) इति अभियुक्तोक्तेः च रूढः. अतः प्रकृतविचारस्य इच्छापूर्वकत्वाद् ''योगेन इच्छां बोधयन्नेव रूढ्या विचारं बोधयतु'' इति एतदर्थं 'जिज्ञासा'पदप्रयोगः इति अर्थः. एवं योगरूढ्यङ्गीकारे गुणम् आहुः अध्या...इत्यादि, यौगिकार्थमात्रोपगमे 'विचारङ्गस्य 'कर्तव्य'पदस्य वा अध्याहारः कर्तव्यः स्याद्; अर्थापत्त्या वा कल्प्यः स्यात्. योगरूढ्योः अङ्गीकारेतु तद् उभयमपि न इति अर्थः।।२७।।

ननु अध्ययनानन्तरं विचाराङ्गीकारे ''वेदमधीत्य स्नायाद्'' (द्र.:मनु.स्मृ.३।१-४) इति स्नानस्मृतिः बाध्येत इत्यतः आहुः -

**स्नानस्मृतेरबाधश्च 'ज्ञेयश्चे'ति विधेर्बलात्।**
**प्रवृत्तिरत्र विप्राणां वैदिकत्वं ततो भवेत्।।२८।।**
**विधिव्यापारविषयाद् गृहमेधीयरात्रिवत्।**
**शब्दतो वैदिकत्वं हि समायात्यर्थतोऽन्यथा।।२९।।**

**स्नान...** इत्यादि. किञ्च पूर्वं वैदिकानाम् असन्तोषो वैदिकानां विचारे अप्रवृत्तिः च इति यद् आशङ्कितं स्थितं तदपि निवारितं भवति इति आहुः प्रवृत्तिः इत्यादि. **ततो** ज्ञानविधिबलादेव वैदिकानां **प्रवृत्तिः** विचारे **भवेद् वैदिकत्वं च** विचारे भवेत्. तत्र हेतुः **विधिव्यापारविषयाद्** इति. अयं भावप्रधानो निर्देशो विचारस्य ज्ञान**विधिव्यापारविषयत्वात्**. अनुक्तस्यापि विचारस्य विधिव्यापरविषयत्वे दृष्टान्तः **गृहमेधीयरात्रिवद्** इति, चातुर्मास्यस्य साकमेधाख्यं तृतीयं पर्वं दिनद्वयसाध्यं, तयोः प्रथमदिने तिस्रः इष्टयः प्रातर्मध्याह्नसायंकालभेदेन



विहिताः. तासु ''मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्'' (तै.सं.१।८।४।१) इति विहिता 'गृहमेधीय'शब्देन उच्यते, तद् गृहमेधीयकर्म, प्रथमदिने सायम् उक्त्वा द्वितीये दिवसे तस्य अङ्गं विधीयते (द्र.:तै.सं.भा.१।८।४।१) इति सायणीये व्याख्यातम्. तच्च अङ्गं पत्न्याः अशनार्थम् ओदनपाकः. तद् उक्तम् आपस्तम्बकल्पे ''दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचन्ति'' (आप.श्रौ.सू.८।१०।१०) इति. श्रुतिश्च ''प्रतिवेशं पचेयुः तस्याश्नीयाद्'' (तै.ब्रा.१।६।७।१)इति. एवं सति यथा तत्र अनुक्तापि रात्रिः मध्ये विधिव्यापारविषया अर्थाद् आयाति तथा अत्र विचारोऽपि अर्थाद् आयाति, विचारं विना ज्ञानस्य अपर्यवसानाद् इति।।२८-२९।।

अत्र आशङ्कते -

**शब्दतो वैदिकत्वार्थम् अध्याहारादिकल्पना।**

**शब्दतः** इत्यादि.

तद् दूषयन्ति -

**असङ्गतिश्चास्य भवेत् सूत्रस्य स्वार्थता यदि।।३०।।**
**परार्थेतु न[1] तैः शक्यः स्वकृतिश्च निरर्थिका।**
**अतोऽधिकारएवार्थो युक्तः स्वातन्त्र्यमस्य हि।।३१।।**
**न दोषाय निराकार्यमथवाङ्गत्वदृष्टितः।**

**असङ्गतिः** इत्यादि. सिद्धम् आहुः अतः इत्यादि. हि यतो हेतोः. **स्वातन्त्र्यं** तु **अस्य** शास्त्रस्य **न दोषाय** इति प्रागेव उक्तं तस्माद् इति अर्थः. पक्षान्तरम् आहुः **निराकार्यम्** इत्यादि. **अथवा** इति पक्षान्तरे, यदि स्वातन्त्र्यं निराकार्यम् **अङ्गत्वदृष्टिं** विधाय अथ निराकार्यम्. तथाच यथा कल्पस्य अङ्गत्वात् न स्वातन्त्र्यं तथा मीमांसायाअपि नेति अङ्गतौल्यम् अस्याः इति अर्थः।।३०-३१।।

अत्र मतान्तरम् आहुः –

**अथवाङ्गत्वमायाति ह्यर्थज्ञानोपयोगतः ।।३२ ।।**

---

१. ''परार्थे न तु'' इति प्र. – मुं.वि. पाठौ

**अनुवादत्व–सापेक्षत्वा–ऽऽप्तसूत्राप्रमाणताम् ।**
**परिहर्तुं प्रवृत्त्यर्थं चाध्याहारं विधेर्जगौ ।।३३ ।।**
**ज्ञानेच्छयोस्तु विषयसौन्दर्यकरणादिना ।**
**लभ्यत्वान्न विधेयत्वं विमर्शो लक्ष्यते ततः ।।३४ ।।**
**यत्त्विच्छासाध्यताभावात् साक्षाज्ज्ञानस्य तत्कृते ।**

**अथवा** इत्यादि. **हि** यतो हेतोः अधिकारपक्षे अङ्गत्वम् **अर्थज्ञानोपयोगाद्** नतु कल्पवद् वाचनिकं, तथा सति ''जिज्ञासा...'' सूत्रस्य अनुवादत्वं सापेक्षत्वं च स्यात्; ततः **च** अधिगतार्थगन्तृत्वात् प्रामाण्यं भज्येत. केवलवेदार्थमात्रनिष्ठानाम् अत्र प्रवृत्तिश्च न स्याद् अविहितत्वाद्. अतो अत्र 'कर्तव्या' इति **विधेः अध्याहारं कश्चिद् जगौ**. यद्यपि 'जिज्ञासा' पदं ज्ञानेच्छावाचकं – तत्र **ज्ञानं** प्रमाणवस्तुपरतन्त्रम्; **इच्छा** च **विषयसौन्दर्या**धीना बाह्य**करणाद्यधीना** च क्वचिद् – अतो अन्य**लभ्यत्वात्** कृतिसाध्यत्वाभावात् च **न विधेयत्वमि**ति विध्यध्याहारो अयुक्तः;[१] तथापि अत्र धर्म**ज्ञानस्य** इच्छाजन्यत्वनिर्वाहाय मध्ये 'जिज्ञासा'पदेन स्वजन्यविमर्शो लक्ष्यतइति, तस्य कृतिसाध्यत्वाद् अध्याहारो युक्तः इति ।।३२–३४ ।।

तद् दूषयन्ति –

**यत्त्विच्छासाध्यताभावात् साक्षाद् ज्ञानस्य तत्कृते ।**
**तन्निर्वाहकतत्क्षेपः तत्रापूर्वेण साम्यतः ।।३५ ।।**
**तस्याक्षेपैकलभ्यत्वाद् यागवद् ज्ञानगो विधिः ।**
**भवेत्तस्यान्यतः प्राप्तेर्न स स्यादिति मन्मतिः ।।३६ ।।**



**यत्तु** इत्यादि. **धर्मज्ञानस्य** इच्छामात्रेण असिद्ध्या **साक्षाद् इच्छासाध्यताभावाद्. तत्कृते** तदर्थम्. **तन्निर्वाहकतत्क्षेपः** इच्छासाध्यत्वनिर्वाहकविचारस्य मध्ये निक्षेपः इति उच्यते. तत्र तस्य विचारस्य **आक्षेपलभ्यत्वाद् अपूर्वेण साम्यतो विधिः यागवद् ज्ञानगो भवेद्.** यथा

---

१. मुद्रितपाठस्तु 'युक्तः' इति मुद्रणाशुद्धिजन्यः प्रामादिको वा प्रतिभाति.

''स्वर्गकामो...यजेत'' (आप.श्रौ.सू.१०।२।१) इत्यादौ यागविधिः अपूर्वद्वारा स्वर्गफलकः एवम् अत्रापि ''जिज्ञासा कर्तव्या'' इति इच्छाविधिः विचारद्वारा ज्ञानफलको भवेत्, **स** विचारगो विधिः **न स्याद,** विचारस्य ज्ञानविधिव्यापारविषयत्वादेव **प्राप्तेः**. तस्मात् तदाक्षेपो जिज्ञासाविधौ न युक्तइति विध्यध्याहारपक्षो न सङ्गतः **इति मन्मतिः** इति अर्थः ।।३५–३६ ।।

एवं मतान्तरदूषणेन स्वमतं स्थिरीकृत्य मीमांसाद्वयैकशास्त्र्यवादिनां प्राचां मतं स्थिरीकर्तुम् आहुः –

**फलाधिकारि–साकाङ्क्षत्वतो नार्थक्यशङ्कितम् ।**
**चतुःसाधनसम्पन्नप्राप्त्यानन्तर्यवाचिना ।।३७ ।।**
**'अथ'शब्देनापनोद्यम्[१] इष्यत्वात् फलतापि च ।**

**फल...** इत्यादि. तेहि ''वेदएव'' (या.स्मृ.१।२।४०) इति वाक्याद् धर्मज्ञानस्य मुक्तिं ''तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति ब्रह्मचर्येण यज्ञेन तपसा श्रद्धयानाशकेन'' (बृ.उ.४।४।२२) इति श्रुत्या ब्रह्मज्ञानं च फलत्वेन स्वीकृत्य मुमुक्षुत्वादिसाधनचतुष्टयसम्पन्नम् अधिकारिणं च स्वीकृत्य तदर्थं धर्मजिज्ञासा कर्तव्या इति आहुः. तत्र पूर्वोक्ताः वादिनः, *तद् असोढ्वा, सूत्रे धर्मस्यैव जिज्ञास्यत्वेन प्रतिज्ञाततत्वात् पूर्वकाण्डे तादृशः फलाधिकारिणो अनुक्तत्वाद् एकशास्त्रवादिमते धर्मजिज्ञासासूत्रं **फलाधिकारिसाकाङ्क्षमेव** तिष्ठति, तथा सति तदपूर्त्या सूत्रम् अनर्थकमेव स्याद् इति* दूषणं वदन्ति. तद् अनूद्य परिहरन्ति उक्तरीत्या फलाधिकारिसाकाङ्क्षत्वतो नार्थक्यशङ्कितं न अर्थो यस्य इति नार्थकं, 'नैकधा' इतिवत् 'न'शब्देन समासः, तस्य भावो नार्थक्यं, तस्य शङ्कितं

नार्थक्यशङ्कितम्. तत्[२] पूर्वोत्तरकाण्डयोः ऐकशास्त्र्याद् उत्तरकाण्डवाक्यैः **चतु:साधनसम्पन्नाधिकारिप्राप्त्या आनन्तर्यवाचिना 'अथ' शब्देन अपनोद्यम्.** ''विविदिषन्ति (बृ.उ.४।४।२२) इति

---

१. ''शब्देनोपनोद्यम्'' इति प्र. – मुं.वि. पाठौ.

२. 'यत्' इति मुद्रितः पाठः प्र.पाठानुसारेण संशोधितः.

श्रुतौ[१] ब्रह्मज्ञानस्य,'स्वर्गकामा'दिपदेषु स्वर्गादेः इव, इष्यत्वश्रावणात् फलतापि सम्पाद्या. तेनच आनर्थक्ये सूत्रस्य परिहृते सोऽपि पक्षो युक्तत्वात् स्थिरः इति अर्थः।।३७।।

ब्रह्मज्ञानस्य फलत्वे पुनः आशङ्कते –

**ब्रह्मज्ञानस्य तस्यापि फलत्वं नोपपद्यते।।३८।।**

**सुखदु:खाभावरूपत्वाभावादिति चेत्.....।**

तस्य इत्यादि।।३८।।

तद् दूषयन्ति –

**....................................न हि।**

**'अथ'शब्दोऽत्राधिकारिविशेषणतया स्थितः।।३९।।**

**मोक्षः सम्बद्ध्यते यस्मात् फलत्वेन........।**

**न हि**...इत्यादि. अत्र अस्मिन् मते **'अथ'शब्दो अधिकारिविशेषणतया स्थितो** मुमुक्षुम् अधिकारिणं बोधयति **यस्माद्.** हि अतो हेतोः **मोक्षः फलत्वेन सम्बद्ध्यते.** सच यावद्दु:खाभावरूपो नित्यनिरतिशयसुखरूपो वा, उभयथापि तस्य फलत्वम् अक्षुण्णम्. तथा सति तत्कारणभूतस्य ज्ञानस्यापि इष्यत्वात् फलत्वं निर्विघ्नम् इति अर्थः।।३९।।



पुनः आशङ्कते –

**..........................अथ मोचने।**

**विशेषणत्वकाम्यत्वपक्षाभ्यां फलता नहि।।४०।।**

---

१. 'श्रुतेः' इति मुद्रितपाठः प्र.पाठानुसारेण संशोधितः.

**जीवनागारदाहादेरपि तत्त्वप्रसङ्गतः।**

**प्रायश्चित्ते परस्त्रीणामपि तत्त्वप्रसङ्गतः।।४१।।**

अथ इत्यादि. **मोचन**स्यापि उदासीनस्य न फलत्वं किन्तु पुरुषविशेषणतया इष्यतया वा, तद् उभयमपि अयुक्तं ''यावज्जीवम् अग्निहोत्रं जुहोति'' (वारा.श्रौ.सू.१।१।१।८६) – ''यस्याहिताग्नेः अग्निः गृहान् दहेत् सो अग्नये क्षामवते पुरोडशम् अष्टाकपालं निर्वपेद्'' (तै.सं.२।२।२।५) इत्यादौ अधिकारिविशेषणत्वेन श्रूयमाणस्य **जीवनागारदाहादेरपि** फलत्वप्रसङ्गात्, यदा-कदाचित् काम्यानां परस्त्रीणामपि प्रायश्चित्ते फलत्वप्रसङ्गात् च. अतो **विशेषणत्व-काम्यत्वाभ्यां** मोचनस्य फलत्वसाधनम् अनुपपन्नम् इति।।४०-४१।।

अत्रापि समादधते –

**उच्यते काम्यतायां तद्विधिबोध्यैकसाध्यता।**

**प्रयोजिका फलत्वे हि तस्मात् सुष्ठूक्तमार्थिकम्।।४२।।**

(एतावानेव अयं ग्रन्थः उपलभ्यते)

**उच्यते** इत्यादि. मास्तु विशेषणत्वेन फलत्वं तथापि काम्यत्वेन फलत्वं न वारयितुं शक्यम्. हि यतो हेतोः **काम्यतायां तद्विधिबोध्या एकसाध्यता** मुख्या साध्यता **फलत्वे प्रयोजिका,** ''स्वर्गकामा...''दिवाक्ये तथा सिद्धत्वाद्. साच ''विविदिषन्ति'' इति वाक्ये ब्रह्मज्ञानस्य दृश्यते. ब्रह्मज्ञानं च मोक्षफलकत्वेनैव पुमर्थः. **तस्माद्** मोक्षस्य आर्थिकं फलत्वमिति यत् तैः शास्त्रैक्यवादिभिः उक्तं तत् सुष्ठूक्तम्. तथाच तन्मतमपि युक्तमेव इति अर्थः।।४२।।

इति श्रीमदाचार्यचरणविरचित-धर्मजिज्ञासासूत्रार्थनिर्णयकारिका-

विवरणं श्रीपीताम्बरात्मज-श्रीपुरुषोत्तमकृतं

सम्पूर्णम्

**।।श्रीकृष्णाय नमः।।**

**श्रीमद्वल्लभाचार्यविरचितं**

# ।।श्रीजैमिनिसूत्रभाष्यम्।।

**श्रीपीताम्बरसुत–श्रीयदुपतिविरचित–भाष्यविवरणोपेतम्**

**(भावार्थपादपरिमितोपलब्धम्)**

**प्रथमे अध्याये कृत्स्नो वेदो धर्मे प्रमाणम् इति उक्तं, तत्र प्रथमे पादे चोदनालक्षणं विध्यंशं परित्यज्य शिष्टो धर्मप्रमितिं जनयति इति च.**

**तत्र अर्थवादानां तदभावम् आशङ्क्य प्रवर्तनाशेषत्वम् उक्तम्. मन्त्राणां, निरर्थकत्वे, व्रीह्यादिवद् धर्मप्रमित्युपयोगो नास्तीति अध्ययनाभावे वेदत्वमपि सन्दिग्धं भवेदिति अर्थवत्ता निरूपिता ब्राह्मणवद्**

---

**श्रीकृष्णाय नमः**

**।।श्रीगोपीजनवल्लभाय नमः।।**

**।।श्रीमद्वल्लभाचार्यचरणकमलेभ्यो नमः।।**

**।।श्रीविट्ठलनाथचरणकमलेभ्यो नमः।।**

श्रीमत्प्रभुचरणकृपया भावार्थचरणभाष्यं यथामतिः विव्रियते[१]।।

अथ द्वितीयाध्यायं व्याचिख्यासवः प्रकृतस्य पूर्वेण सह उपजीवकत्वरूपां सङ्गतिं बोधयितुं ''मानाधीना मेयसिद्धिः'' इति प्रमाणं निरूप्य तदुपजीव्यो अत्र कर्मभेदो निरूप्यते इति बोधयितुं शाबरभाष्याविरोधेन पूर्वं विस्तरेण निरूपितं प्रथमाध्यायार्थं सङ्क्षेपण अत्र अनुवदन्ति प्रथमे अध्याये इत्यादि.

''**अथातो धर्मजिज्ञासा**''(जै.सू.१।१।१) इति प्रथमाधिकरणे धर्मविचारं प्रतिज्ञाय को धर्मः? इति जिज्ञासायां ''**चोदनालक्षणोऽर्थो धर्मो**''(जै.सू.१।१।२) इति द्वितीयेन ''विधिवाक्यलक्षणको अर्थो धर्मः'' इति लक्षणकथनेन तां पूरयित्वा; कथं चोदनालक्षणः? इति जिज्ञासायां



१. जूनागढ़ातिरिक्तसर्वादर्शेषु 'विव्रीयते' इति पठ्यते. इह 'पुष्टिभक्तिसुधा'पत्रिकायाम् आद्यसम्पादकस्य–''पठ्यमानमेतद् 'व्रीङ्' धातोः दिवादेः 'व्री' धातोः क्र्यादेः वा कर्मणि लः''इति शोधनिका.

**धर्मप्रमितिं[१] जनयिष्यन्तीति. उभयं हि धर्मे प्रमाणं, ''मन्त्रब्राह्मणे यज्ञस्य प्रमाणम्'' (आप.श्रौ.सू.२४।१।३०) इति वाक्यात्, प्रवृत्तेः पूर्वं ब्राह्मणं जनयति – प्रवृत्तिसमये मन्त्रः इति. नापि स्मारकत्वं स्वतन्त्रत्वाद् अप्रामाण्यप्रसङ्गात् च.**

---

''**तस्य निमित्तपरीष्टिः**''(जै.सू.१।१।३) इति तृतीयेन तज्ज्ञापकपरीक्षां प्रतिज्ञाय ''**सत्सम्प्रयोगे...**'' (जै.सू.१।१।४) इति चतुर्थेन प्रत्यक्षाविषयत्वं तस्य बोधयित्वा ''**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः**'' (जै.सू.१।१।५) इति पञ्चमेन शब्दस्य स्वतःप्रामाण्यं बोधितम् ततः तत्रापि ''कथम् इदम्?'' इति आकाङ्क्षायां ''**कर्मैके तत्र दर्शनाद्**''(जै.सू.१।१।६) इत्यादिभिः अधिकरणैः शब्दात्मकस्य वेदस्य नित्यत्वं स्थापितम्. अग्रेच अर्थवादादयो वेदभागाः विचारिताइति **कृत्स्नो वेदो धर्मे प्रमाणम् इति उक्तम्** इति अर्थः. विशेषाकारेण बोधनाय पादार्थान् वदिष्यन्तः प्रथमस्थं विशेषम् आहुः **तत्र** इत्यादि. चोदनायाः प्रवर्तकत्वात् तल्लक्षणं **विध्यंशं परित्यज्य शिष्टो धर्मप्रमितिं जनयति** इत्यपि तत्र सिद्धम्. नच तस्याः अप्रामाण्यं शङ्क्यं विधेये अर्थे धर्मत्वज्ञापनेन प्रामाण्यस्य अग्रे वक्तव्यत्वात्.

द्वितीयस्य अर्थम् आहुः **तत्र अर्थ...** इत्यादि. चोदनायाः अस्ति कार्यद्वयं धर्मप्रमितिः धर्मे प्रवर्तनं **च. तत्र अर्थवादानां** धर्मप्रमित्यजनकत्वाद् अप्रामाण्यम् **आशङ्क्य** तेषां **प्रवर्तनाशेषत्वम् उक्तं,** साक्षाद् धर्मप्रमितिम् अजनयन्तोपि स्वार्थप्रमितिम् उत्पाद्य इष्टसाधनताव्युत्पादनेन प्ररोचनाद्वारा जनयिष्यन्तीति.

मन्त्राणान्तु **व्रीह्यादिवद्** अनुष्ठानोपयोगो **नास्तीति** तेषां प्रमित्युपयोगो वक्तव्यः. तत्र ते चेत् निरर्थकाः स्युः तदा **प्रमितावपि उपयोगो नास्तीति** अध्ययनाभावे तेषां वेदत्वमपि सन्दिग्धं भवेदिति तदभावाय तेषाम् अर्थवत्ता प्रयोजनवत्ता ''**तदर्थशास्त्राद्**'' (जै.सू.१।२।३१) इति अधिकरणे निरूपिता, अर्थवत्त्वे सति तेपि **ब्राह्मणवद् धर्मप्रमितिं जनयिष्यन्तीति.** अतः तेषामपि प्रमाणत्वम्. नच अत्र मानाभावः हि यतो हेतोः

१. धर्मप्रतीतिम् इति मुद्रितपाठः.

''मन्त्रब्राह्मण...'' (आप.श्रौ.सू.२४।१।३०) इति वाक्याद् उभयं यज्ञस्य प्रमाणम्. नच अन्यतरवैयर्थ्यं, **प्रवृत्तेः पूर्वम्** इत्यादिना उक्तरीत्या कालभेदेन उभयसार्थक्यात्. नच ब्राह्मणेन जातायां प्रमितौ तदर्थस्मारणमेव मन्त्रैः कार्यतइति स्मारकत्वमेव मन्त्राणाम् अस्तु इति शङ्क्यम्, उक्तवाक्ये तेषां प्रमाणत्वेन पृथग् उक्त्या वेदेऽपि काण्डभेदेन प्रायशः कथनेन च तेषामपि प्रमितिजनने स्वतन्त्रत्वात्. नच *विधिवाक्यानां प्रवर्तनाबोधकत्वात् प्रवर्तनाक्षिप्तेष्टसाधनत्वरूप-धर्मत्वप्रमितिजनकत्वम् अस्तीति तेषामेव धर्मे मुख्यं प्रामाण्यम्, अर्थवादानां च प्रवर्तनापेक्षितप्राशस्त्यलक्षणकत्वात् तदेकवाक्यतया धर्प्रमितिजनकत्वं, नामधेयानां च विधिवाक्यघटकत्वाद् धर्मप्रमितिजनकत्वं युक्तम्. मन्त्राणान्तु काण्डान्तरवर्तित्वेन वाक्याद् विप्रकृष्टतया तदेकवाक्यत्वाभावाद् मानान्तरसिद्धप्रयोगसमवेतार्थस्मारकत्वमेव युक्तम् इति* वाच्यं, तथासति मानान्तरसिद्धार्थानुवादकतया अप्रामाण्यप्रसङ्गात्. नच स्मृतेरपि यथार्थज्ञानत्वेन प्रमाणरूपत्वात् मन्त्राणां स्मारकत्वेपि न प्रामाण्यहानिः इति वाच्यं, तथा सति यथार्थज्ञानजनकत्वेन सर्वतन्त्रसिद्धेन लक्षणेन कार्यसिद्धौ अनधिगतार्थगन्तृत्वरूपविशेषाङ्गीकारस्य वैयर्थ्यापत्तेः औत्पत्तिकसूत्रविरोधापत्तेः सिद्धान्तभङ्गापत्तेः च. अतः सूत्रानुरोधेन शब्दजन्ये ज्ञाने अनधिगतार्थावगतित्वरूपो विशेषः प्रमात्वप्रयोजको अवश्यम् अभ्युपेयः. तथासति अनुवादकस्य अप्रामाण्यम् अर्थादेव आयातम्. ततश्च अनुवादकत्वेन अप्रामाण्यस्य स्मारकत्वेन प्रामाण्यस्य च साङ्कर्ये वैरूप्यापत्तिः एकतरनिर्णयस्यापि अभावापत्तिः च. मन्त्रजन्ये ज्ञाने स्मृतित्वप्रमितित्वयोः समावेशेन साङ्कर्ये तयोरपि जातित्वहानिप्रसङ्गः. संस्कारोद्बोधकानामपि स्मृतिं प्रति व्यापारवद् असाधारणकारणत्वेन तेषामपि सप्तमप्रमाणत्वापत्त्या षट्प्रमाणवादभङ्गप्रसङ्गः. प्रमात्वस्य[१] अनुभवत्वव्याप्यत्वेन स्मृतित्वस्य च साक्षाद् ज्ञानत्वव्याप्यत्वेन तयोः भेदस्य सर्वतन्त्रप्रसिद्धतया तत्त्यागस्य अयुक्तत्वञ्च. एवं स्मृतेः प्रमितित्वाङ्गीकारे परोक्षज्ञानत्वेन शाब्दानुमित्योरपि स्मृतित्वापत्तिः दुर्वारा. यथार्थज्ञानत्वस्य प्रमितिनियामकत्ववत् परोक्षज्ञानत्वस्य स्मृतित्वनियामकत्वेऽपि बाधकाभावात्. अतः स्मृतित्वप्रमिति

---

१. 'प्रमात्वस्य' इति जूनागढीयः पाठः, 'प्रमाणत्वस्य' इतितु मुद्रितः .



**प्रमितिरेव कर्माङ्गाङ्गत्वा!त् न अप्रमितिः, ''विद्यया करोति''(छा.उ.१।१।१०) इति श्रुतेः.**

---

त्वयोः भेदएव आस्थेयः. तथासति मन्त्राणां स्मारकत्वात् प्रामाण्यं दुर्निरूपमेव इति दिक्. ननु *अस्तु अप्रामाण्यं तथापि ''मन्त्रेणैव स्मर्तव्यम्'' इति नियमात् तेषाम् अनुष्ठेयस्मारणादेव अर्थवत्त्वे अङ्गत्वहानिस्तु न भविष्यतीति इष्टापत्तिः इति* आकाङ्क्षायाम् आहुः **प्रमितिरेव** इत्यादि. **प्रमितिरेव अङ्गं न अप्रमितिः,** ''यदेव विद्यया करोति तत्तदेवास्य वीर्यवत्तरं भवति'' (छा.उ.१।१।१०) इति श्रुतेः. नच इदम् अङ्गोपासनाविषयमिति न कर्मान्तरे तस्याः अङ्गत्वम् इति वाच्यं, न्यायतौल्यात्. ''उभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद'' (छा.उ.१।१।१०) इति विद्वदविद्वत्प्रयोगौ प्रस्तुत्य ''यदेव विद्यया'' (छा.उ.१।१।१०) इति श्रुतेः आम्नातत्वात, सर्वकर्मसु प्रायेण विद्वद्वाक्यानां दर्शनात् च. अतः कर्मानुष्ठानकालीनं वेदनं तत्कर्मफलएव अतिशयं जनयति इति अवश्यम् अभ्युपेयम्. अन्यथा तद्वाक्यवैयर्थ्यापत्तेः. अतः न्यायस्य अत्रापि तौल्यात् मन्त्रस्यापि विद्याजनकत्वेनैव प्रामाण्यं नतु स्मारकत्वेनेति. नच 'विद्या' पदेन स्मृतिरेव अत्र उच्यते इति वाच्यं, सङ्कोचे मानाभावात्; स्मृतौ 'विद्या' पदप्रयोगस्य क्वापि अदर्शनात् च. नच *मन्त्रजन्यप्रमितेरेव अङ्गत्वे मन्त्राणाम् अङ्गत्वभङ्गप्रसङ्गाद् ''आग्नेय्याग्नीध्रमुपतिष्ठते'' ( ) ''इषेत्वेति''(द्र.: आप.श्रौ.सू.१।१।१०।प.१)शाखां छिनत्ति इत्यादौ श्रूयमाणानां तृतीयाविभक्ति-'इति'शब्दादीनां पीडापत्तिः इति* वाच्यं, 'विद्यया' इतिपदेन अप्रमितिरूपायाः स्मृतेरेव अङ्गत्वं निवार्यते न अन्येषामिति अदोषात्. किञ्च मन्त्रस्य स्मारकत्वमपि किं विधिपदसदृशपदवत्त्वेन सम्बन्धित्वेन वा ? न आद्यः, ''इषे त्वा...'' दीनां तदभावात्. न द्वितीयः ''सर्पराज्ञिया ऋग्भिः गार्हपत्यमादधाति'' (तै.सं.१।५।४।१) ''सर्पराज्ञिया ऋग्भिः स्तुवन्ति''(तै.सं.७।३।१।२) इति नानास्थलविनियुक्तमन्त्रेषु प्रकृतस्मरणदौर्घट्यापत्तेः. अतः ''प्रकरणादिकं तत्सहकारी'' इति वक्तव्यम्. तथासति आवश्यकत्वात् लाघवात् च तस्यैव स्मारकत्वम् अस्तु कृतं मन्त्रेण. नच व्यापाराभावे तस्य प्रयोगकरणत्वं कथं स्याद् इति शङ्क्यं, तज्जन्यायाः प्रमितेरेव व्यापारत्वस्य उक्तत्वात्.

**प्रसङ्गात् स्मृतयोऽपि धर्मे प्रमाणमिति विचारिताः. ततो विध्युद्देशान्तर्गत-'उद्भिदा'(ता.ब्रा.१९।७।२।३)दिशब्दानाम् अर्थवादमन्त्रापरपर्याय-गुणविधित्वम् आशङ्कितम्, अर्थवादवद्**

**भिन्नवाक्यत्वाभावे विध्येकवाक्यत्वाभावात्. स्वातन्त्र्याभावे मन्त्रत्वं न उपपद्यतइति आनर्थक्ये पर्यवसानमिति नामधेयत्वम् उक्तं समुदाय-परिज्ञानर्थम्. नहि साङ्गप्रधाने नामातिरिक्तं किञ्चित् प्रमाणम् अस्ति. अतो यादृशस्य फलसाधकत्वं तज्ज्ञानमपि अङ्गम्. ततः सन्देहेऽपि उपायः उक्तो, विध्यंशस्यापि धर्मत्वज्ञापकत्वात्, फलस्तुत्योरपि अर्थत्वसम्पादकत्वात्, कृत्स्नो वेदो धर्मे प्रमाणम् इति सिद्धम्.**

---

नहि स्मरणस्यैव व्यापारत्वे किञ्चित् नियामकं वाक्यम् अस्ति. विनियोगविधिबलात् कल्प्यन्तु विद्यावाक्येनैव गतार्थत्वाद बाधितम्. तस्मात् प्रमितिद्वारैव मन्त्राणां करणत्वम् इति निश्चयः.

तृतीयपादार्थम् आहुः **प्रसङ्गाद्** इत्यादि. प्रत्यक्षवेदार्थे विचार्यमाणे नित्यानुमेयवेदस्यापि स्मरणात् तन्मूलिकाः स्मृतयोपि तथा विचारिताः इति अर्थः.

तुरीयस्य अर्थम् आहु ततः इत्यादि. **उद्देशः** उपरितनो देशः तत्र विधिवाक्ये स्थितानाम् 'उद्भिदा'दि पदानाम् अर्थवादापरपर्यायत्वं वा मन्त्रापरपर्यायत्वं तद्विधीनां गुणविधित्वं वा इति आशङ्कितम्. तत्र यदि तेषाम् अर्थवादत्वं स्यात् स्वार्थबोधे समाप्तिः स्यात्. तथासति भिन्नवाक्यत्वे प्रोचनादिना अङ्गत्वं परिकल्प्य विध्येकत्वेन प्रामाण्यं कल्प्येत. साच एषां नास्तीति अर्थवादवद् भिन्नवाक्यत्वाभावे विध्येकत्वाभावात् न अर्थवादत्वम् उपपद्यते भिन्नपाठाभावात्; स्वातन्त्र्याभावे मन्त्रत्वं च न उपपद्यतइति आनर्थक्ये पर्यवसानमिति, तदभावाय तेषां नामधेयत्वम् उक्तम्. **समुदायपरि!ज्ञानार्थं** यागत्रयसमुदायो दर्शत्रिकान्तरसमुदायः 'पूर्णमासः' इति ज्ञानार्थं तत्प्रयोजनम् आहुः नहि इत्यादि. तस्यापि प्रयोजनम् आहुः अतः इत्यादि. अङ्गम् इति ''यदेव विद्यया'' (छा.उ.१।१।१०) इत्यत्र तस्यापि सङ्ग्रहाद् इति. ततः एतन्निर्धारोत्तरं **''सन्दिग्धेषु वाक्यशेषात्''** (जै.सू.१।४।२९) **''अर्थाद्वा कल्पनैकदेशत्वाद्''** (जै.सू.१।४।३०) इति सूत्रद्वयेन

**अतः परं वाक्यार्थव्याख्यानावसरः. तत्र अयं सन्देहः – कृत्स्नेनापि वेदेन एको धर्मः प्रतिपाद्यते उत अनेकः ? यदापि अनेकः तदा पदे-पदे धर्मः उत केषुचिदेव ? इति तदर्थं कर्मभेदाध्यायः आरभ्यते.**

**तत्र प्रथमे पादे केषुचिदेव धर्मः इतरत् तदर्थम् इति निरूप्यते.**

---

अर्थवादानाम् अर्थसामर्थ्यस्य च सन्देहवारकतया प्रामाण्यम् उक्तम् इति अर्थः. ननु एतन्मते नामधेयानां समुदायज्ञापकतया, स्मृतीनां च



नित्यानुमेयवेदबोधितकर्मज्ञापकतया, मन्त्राणां च अनुष्ठानकाले तत्तत्प्रमितिजनकतया धर्मे प्रामाण्यं युक्तं चोदनायास्तु प्रवर्तकत्वेन अर्थवादानां च प्रवर्तनाशेषत्वेन धर्मप्रमित्यजनकत्वाद् धर्मे प्रामाण्याभावे कथं कृत्स्नस्य वेदस्य धर्मे प्रामाण्यम् ? इति आकाङ्क्षायां तयोः तथात्वप्रकारम् आहुः विध्यंशस्य इत्यादि. यद्यपि विध्यंशः प्रवर्तकः तथापि चोदनायाः धर्मलक्षणतया धर्मत्वं ज्ञापयन्नेव प्रवर्तयतीति तद्द्वारा तस्यापि अस्ति धर्मप्रमितिजनकत्वं धर्मस्य फलशेषतया परतःपुरुषार्थत्वेन 'स्वर्गकामा'दि पदबोधितस्य फलस्य तज्जनककर्मोत्कर्षबोधिकायाः आर्थवादिक्याः स्तुतेः च पुरुषैः अर्थ्यमानत्वरूपं यदर्थत्वं तत्सम्पादकत्वाद अस्ति तेषामपि धर्मप्रमितिजनकत्वम्. अतः **कृत्स्नो वेदो धर्मे प्रमाणम्** इति पूर्वाध्याये **सिद्धम्** इति अर्थः. एतेन ''पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः'' (श्लो.वा.सू.१।१।१/१२६) इति भट्टवार्तिके यत् *प्रथमपादएव प्रमाणचिन्तासमाप्तिः त्रिपाद्यान्तु कथं चोदनालक्षणो धर्मः इति, कथम् अमुना अप्रतिज्ञातः प्रामाण्यप्रकारो बोध्यतइति शाबरभाष्यविरुद्धम्* अङ्गीक्रियते तत् न अस्मत्सम्मतम् इति बोधितम्.

एवं पूर्वोक्तं सर्वं सङ्क्षेपतो निरूप्य प्रस्तुतम् अवतारयन्ति **अतः परम्** इत्यादि.

तत्र इति अध्यायरूपवाक्यस्य अर्थे व्याख्यातव्ये. **यदापि अनेकः** इति नामधेयपादे नानानाम्नां प्रतिपादनाद् अनेकः. **तदापि** किं मन्त्रब्राह्मणयोः पदे-पदे, विधिवाक्यस्य वा **पदे-पदे धर्मः** प्रतिपाद्यते **उत केषुचिदेव** इति शङ्कायां तदर्थं तन्निवृत्तये अयम् अध्यायः आरभ्यते इति अर्थः. तेन सर्वो वेदो विधिवाक्यमात्रं वा उदाहरणम्.

**तत्र ''विनिगमनाभावात् सर्वेषु पदेषु धर्मः'' इति आशङ्क्य विनिगमनाम् आह –**

**भावार्था कर्मशब्दाः तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ।।२।१।१।।**

**भावार्थाः कर्मशब्दाः इति. यो विधीयते सो अर्थः; क्रियाच विधीयते, पुरुषप्रयत्नेन सए[सै!]व निष्पाद्यतइति. सा क्रिया कर्मवाचकेभ्यएव प्रतीयते, अतः कर्मशब्दाः एव साक्षाद् धर्मवाचकाः. कर्मशब्दानाम् अर्थम् आह ''भावएव अर्थो येषाम्'' इति. इदमेव अनुगतं रूपं क्रियासामान्यं 'धर्म'पद-प्रवृत्तिनिमित्तं क्रियासामान्यं प्रतिपादयन्तो विशेषप्रतिपादकाः इति उक्तं भवति.**

अध्यायार्थम् उक्त्वा पादार्थम् आहुः **तत्र प्रथमे** इत्यादि. **निरूप्यते** इति धर्मभेदज्ञापनार्थं निरूप्यते. एवं पादार्थं निरूप्य तावता संशयस्य अनिवृत्तेः विशषतो वक्तुम् आद्याधिकरणम् अवतारयन्ति तत्र इत्यादि. **विनिगमनम् आह** इति, विनिगम्यते अनेन इति विनिगमनम्. ''केषुचिदेव पदेषु निरूप्यते'' इत्यस्य निर्णायकं हेतुम् अनेन अधिकरणेन आह इति अर्थः. व्याकुर्वन्ति **यो विधीयते** इत्यादि. एवं सामान्यतः सूत्रार्थम् उक्त्वा विशेषतोपि[1] तम् आहुः **कर्म** इत्यादि, पुरुष-प्रयत्न-निष्पाद्य-क्रियारूप-धर्म- वाचकाः कर्मशब्दाः. के ? इति अपेक्षायां तान् बोधयितुं तेषाम् अर्थम् आह इति अर्थः. व्याकुर्वन्ति **इदम्** इत्यादि, **इदं** क्रियावाचिनां धातुत्वानुशासनात् सर्वधातुषु **अनुगतं रूपं यत् क्रियासामान्यं सः भावः** सो **अर्थो** विधेयो **येषां** ते भावार्थाः, तादृशाः ये शब्दाः ते कर्मवाचकाः इति अर्थः. ननु धर्मवाचकनिर्धारार्थं प्रवृत्तः आचार्यो धर्माधर्मादिसाधारणक्रियासामान्यवाचकं किमिति वदति ! इत्यतः आहुः **धर्म...** इत्यादि. तथाच अत्र तद्व्याप्यम्[2] इति अर्थः. यद् 'धर्म'पदप्रवृत्तिनिमित्तं क्रियासामान्यं तत् प्रतिपादयन्तो

१. वक्तुं तम् आहुः इत्यपि जूनागढ़ीयः पाठः.

२. तद्व्याप्यम् इति धर्माधर्मसाधारणक्रियासामान्यव्याप्यम् इति अर्थः.

**ननु किं रूपद्वयनिरूपणेन क्रियावाचिभ्यएव धर्मः प्रतीयते इति उच्यतां, सत्यं, क्रियामात्रं यदि धर्मो भवेत् तदा न वक्तव्यं किन्तु अतीन्द्रियो यागादिः स्थिरो धर्मः. तत्र ''सामान्यं नित्यम्'' इति नित्यता प्रतिपादिता विशेषस्तु अतीन्द्रियता.**

''विशेषानालिङ्गिता सामान्यबुद्धिः न भवति'' इति विशेषालिङ्गनाद् यज्ञदानादिरूप-विशेषप्रतिपादकाः, नतु तच्छून्यकेवलक्रियावाचकाः इति **भावार्थाः कर्मशब्दाः** इत्यनेन उक्तं भवति. यदि एवम् अभिप्रायो न स्यात् तदा 'भावार्थ' पदं न ब्रूयात्. आकृत्यधिकरणे जातौ पदशक्तेः अङ्गीकृतत्वेन तावतैव शब्दार्थयोः नित्यतायाः निर्वोढुं शक्यत्वात्. अतो 'यजत्या'दयो धातुत्वेन रूपेण क्रियासामान्यं 'यजतित्वा'दिना प्रतिनियतरूपेण क्रियासामान्यव्याप्यं यागसामान्यरूपं विशेषं प्रतिपादयन्ति इति अर्थः. भट्टवार्तिकेपि ''धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते तथापि सर्वसामान्यरूपेणैवावगम्यते''(त.वा.२।१।१/२९) इति उक्तम्. अतो



धात्वर्थबोधकैः पदैः सामान्यस्थाने सैव बोध्यते. तयैव अनुगतप्रतीतिनिर्वाहात् नतु जात्यन्तरम् इति बोध्यम्.

अत्र धर्मानित्यत्ववादी शङ्कते ननु इत्यादि. यदि[1] अनेको धर्मः प्रतिपाद्यते तदा – भावना भावः उत्पादना इति यावत् सो अर्थो येषां ते – भावार्थाः आख्यातशब्दाः, तेभ्यः क्रियावाचिभ्यएव धर्मः प्रतीयते इति उच्यताम् ! किं क्रियायाः रूपद्वयनिरूपणेन ? नच कालान्तरभाविफलानुत्पत्तिप्रसङ्गः, क्रियायाः त्रिक्षणावस्थायित्वेपि तज्जन्यस्य अपूर्वस्य फलपर्यन्तम् अवस्थानेन उपपत्तेः. अतो व्यर्थं रूपद्वयनिरूपणम् इति अर्थः. अत्र समादधते **सत्यम्** इत्यादि. यदि पुरुष**क्रियामात्रं धर्मो भवेत् तदा** त्वदुक्तरीत्या निर्वाहाद् रूपद्वयं न वक्तव्यं भवेत्. नहि तथा किन्तु अतीन्द्रियो वेदैकसमधिगम्यो यागादिः स्थिरो धर्मः. तत्र कथं स्थिरः ? इति आकाङ्क्षायां सामान्यं नित्यमिति 'यजति'बोधितयागसामान्यरूपेण नित्यता अस्ति; अतीन्द्रियत्वरूपो विशेषश्च तत्र वर्तते. केवलस्य सामान्यस्य अतीन्द्रियत्वात्. अतो यागस्य नित्यातीन्द्रियरूपत्वात् रूपद्वयकथनं युक्तम् इति अर्थः.

१. यद्यपि इति जूनागढ़ीयः पाठः.

**द्रव्यदेवतासम्बन्धो हि यागः. देवतायाः अतीन्द्रियत्वात्, तत्सम्बन्धोऽपि अतीन्द्रियः. सम्बन्धश्च प्रीतिहेतुत्वेन स्वीकारः; द्रव्यञ्च अलौकिकमिति अनित्यतायां न कोऽपि हेतुः.**

ननु विहितक्रियाविशेषं कुर्वाणं दृष्ट्वैव ''अयं यजति'' इति प्रत्ययाद् अभिलापात् च तस्याः प्रत्यक्षत्वनिश्चयात् कथम् अतीन्द्रियता ? इत्यतः आहुः **द्रव्य...**इत्यादि. 'यजिर्' देवपूजासङ्गतिकरणदानेषु अर्थेषु शक्तइति प्रथमातिक्रमे कारणाभावाद् देवपूजैव अत्र अर्थः. साच अत्र द्रव्यकृता. किञ्च **''यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वाद्''** (जै.सू.४।२।२७) इति चातुर्थिके सूत्रे – ''द्रव्यदेवताक्रियासमुदायो यागः'' इति लक्षणं यागस्य सिद्धं तथा ''द्रव्यदेवते यागस्य रूपम्'' इति आमिक्षाधिकरणे सिद्धम्. तयोश्च न उदासीनयोः रूपत्वम् अपितु सम्बद्धयोरेवेति द्रव्यदेवतासम्बन्धो यागः. तत्र देवतास्वरूपं चेतनतया विग्रहवत्तया च वैयासे दर्शने सिद्धम्. अत्रच अग्रे तदविरोधेन व्युत्पाद्यम्. गीतायाञ्च ''देवान् भावयतानेन ते देवाः भावयन्तु वः, परस्परं भावयन्तः श्रेयः परमवाप्स्यथ''

(भ.गी.३।११)इति कथनात् परस्परभावनस्य च श्रद्धया पूजनेन तस्य द्रव्यस्य प्रीत्या स्वीकारेण च सम्भवात्, ते विना असम्भवात् च प्रीतिहेतुत्वेन स्वीकारएव सम्बन्धः. सच देवतायाः अतीन्द्रियत्वात् परात्मधर्मत्वात् **च अतीन्द्रियः**. नच *स्वत्वजनकव्यापाररूपस्य स्वीकारस्य देवतावृत्तित्वेन यजमानावृत्तित्वेन च ''देवता यजति'' इति प्रयोगापत्तिः ''देवदत्तो यजति'' इति प्रयोगानापत्तिः च इति* वाच्यं, देवतानिष्ठस्य तादृशव्यापारस्य फलरूपधात्वर्थत्वेन कर्मनिष्ठतया 'यजति'इति प्रयोगसम्भावनायाएव अभावात् तादृशप्रयोगस्य व्यापाराश्रये कर्तर्येव अनुशासनाद् यजमाने 'यजति'इति प्रयोगाभावसम्भावनायाअपि अभावात्. ऋत्विक्षु तु तादृशप्रयोगस्य ''योधाः युध्यन्ति'' इत्यादिवद् इष्टत्वात् प्रैषे ''होतर्यज'' इति प्रयोगदर्शनात्. अतो व्यापाररूपस्य यागस्य प्रत्यक्षत्वेपि फलरूपस्य यागस्य अतीन्द्रियता निष्प्रत्यूहा इति अर्थः. ननु भवतु एवम् अतीन्द्रियत्वं तथापि होमानन्तरं त्यक्ते द्रव्ये देवता तत् स्वीकरोति, द्रव्यञ्च व्रीह्यादिकम् अनित्यमिति तज्जन्यस्य होमोत्तरभाविनः स्वीकारस्य कथं नित्यत्वम्? अतः आहुः द्रव्यञ्च

इत्यादि. ''अपश्यन् पुरोडाशं कूर्मं भूतं सर्पन्तम्''(तै.सं.२।६।३।३) ''तस्यानुमृश्य योनिमाच्छिनत् सा सूतवशा अभवत् तत्सूतवशायै जन्म'' (      ) ''प्रजापते रक्ष्यश्व यत्तत्परापत्तदश्वोऽभवद्'' (तै.सं.५।३।१२।१) इत्यादिषु अर्थवादेषु द्रव्यस्य अलौकिकत्वं सिद्धम्. नच अर्थवादानां स्वार्थे अप्रमाण्यं, ''प्रजापतिर्वरुणायाश्वमनयद्'' (तै.सं.२।३।१२।१)इति अश्वप्रतिग्रहेष्ट्यर्थवादस्य व्यवधारणनिर्णायकताभावे तस्याः इष्टेः दातृकर्तृकत्वं न तेन निर्णीयेत, ''तेजो वै घृतम्'' (तै.ब्रा.३।१२।५।१२) इत्यादिना घृतादेः शर्कराञ्जनादिकरणता न निर्णीयेत, एवं सर्वत्रेति तेषां विधिस्तावकत्वेपि स्वार्थे प्रामाण्यम् इति ज्ञातव्यम्.

किञ्च श्रीभागवते पुरुषसूक्तविवरणाध्याये यज्ञसम्भाराणां पुरुषावयवरूपत्वं प्रतिपाद्य ''इति सम्भृतसम्भारः पुरुषावयवैरहं तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम्'' (भाग.२।६।२७) इति ब्रह्मणा उक्तमिति द्रव्यदीनां सर्वेषामेव सम्भाराणाम् अलौकिकत्वं निर्बाधम्. अतो ''यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्'' (ऋ.सं.१०।९०।१६) इत्यादि श्रुतिसिद्धस्य प्राथमिकयागस्य अलौकिकैरेव पदार्थैः सिद्धिः. पाश्चात्येषु तु कर्तृषु तादृशयोग्यतायाः अभावेन तेषां सम्भाराणाम् असंनिधानात् प्रोक्षणादिभिः तैः संस्कारैः ते अलौकिकाः पदार्थाः तेषु लौकिकेषु



द्रव्यादिषु संनिधाप्यन्ते प्रतिष्ठावाहनादिसंस्कारैः मूर्तौ देवतावद्. अन्यथा लौकिकैरेव द्रव्यादिभिः यागनिष्पत्तेः संस्काराणां वैयर्थ्यमेव स्यात्, संस्कारबोधकप्रमाणानि च पीड्येरन्. अतो लौकिकानि द्रव्यादीनि तेषाम् अधिष्ठानान्येव देवतायाः मूर्तिरिव. अधिष्ठानभूतद्रव्यादीनाञ्च अविहितनिषिद्धद्रव्यपुरुषादिसंसर्गे अलौकिकस्य तस्य–तस्य द्रव्यादेः ततः तिरोधानमेव. मूर्तेः दुष्टसंसर्गे भङ्गादौ च ततः देवतायाः इव. अतो ''यस्योभयं हविरार्तिमार्च्छेत'' (तै.ब्रा.३।७।१) ''यस्य सर्वाणि हवींषि नश्येयुः दुष्येयुः अपहरेयुः वा'' (आप.श्रौ.सू.९।१५।१४) इत्यादिना उक्तम् आर्तिनाशाद्यपि दुःसंसर्गवशाद् हविषां लौकिकत्वएव. प्रायश्चित्तं द्रव्यान्तरादानादिकं च प्रकारान्तरेण देवतेज्यादिपूर्त्यर्थमिति

**नहि चेष्टा यागो येन विनाशः कल्प्यते अदृष्टं वा. ये क्षणिकत्वम् अदृष्टं वा कल्पयन्ति न ते 'याग'पदार्थं विदुः. भावार्थाः ये कर्मशब्दाः इति अर्थः. दानमपि परस्वत्वापादनम् अतीन्द्रियम्. लोकास्तु तद्विषयक–कायिक–व्यापारे तत्प्रयोगम् आहुः.**

न उक्तश्रुतीनां विरोधः. नापि **''शेषाद् व्यवदाननाशे स्याद्...''** (जै.सू.६।४।१)इति सूत्रस्य प्रमादादिरूपापराधेन नश्यदवस्थाद् अवदानाद अलौकिकस्य तस्य तिरोभावात् इति एवं यागीयद्रव्यस्वरूपं निश्चिते तद् द्रव्यं नित्यम् अलौकिकमेव. देवता च अलौकिकी नित्येति तत्स्वीकाररूपस्य यागस्य क्रियावद् अनित्यतायां न कोपि हेतुः. तथाच ''परस्परं भावयन्तः'' (भ.गी.३।११) इति गीतावाक्याद् यागजन्यफलभोगपर्यन्तं द्रव्यस्वीकारजन्यप्रीतेरपि अवस्थानमिति स्वीकारस्य स्थिरत्वरूपं नित्यत्वं द्रव्यदेवतयोः च भगवदवयवत्वेन स्वरूपतो नित्यत्वमिति उभयमपि निर्बाधम् इति अर्थः.

ननु तथापि ''सिद्धसाध्यस्वभावाभ्यां धात्वर्थो द्विविधस्तयोः, अन्योत्पादानुकूलात्मा भावना साध्यरूपिणी'' (      ) इति अभियुक्तोक्तेः साध्यरूपस्य धात्वर्थस्य अनित्यत्वात् चेष्टारूपस्य तस्य नश्वरत्वमेव इत्यतः आहुः **नहि चेष्टा** इत्यादि. द्वितीयस्कन्धस्थेषु सम्भारवाक्येषु ''चातुर्होत्रं च सत्तम'' (भाग.२।६।२४) इत्यनेन क्रियायाअपि पुरुषावयवेषु गणनात् लौकिकी **चेष्टा न यागः** किन्तु तदधिष्ठानकं क्रियान्तरम् अतीन्द्रियम् अतो न तस्यापि नश्वरत्वम्. अतो विनाशो अदृष्टं वा किमर्थं कल्पनीयम्? इति अर्थः. वाक्यानि तु ''यदास्य

नाभ्यान्नलिनादहमासं महात्मनः, नाविदं यज्ञसम्भारान् पुरुषवयवादृते, तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः, इदं च देवयजनं कालश्चोरुगुणान्वितः, वस्तून्योषधयः स्नेहो रसलोहमृदो जलं, ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम, नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च, देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रमेव च, गतयो मतश्चैव प्रायश्चित्तं समर्पणं, पुरुषावयवैरेते सम्भाराः सम्भृता मया इति सम्भृतसम्भारः पुरुषावयवैरहं तमेव पुरुषं यज्ञं तेनैवायजमीश्वरं, ततस्ते भ्रातर इमे प्रजानां पतयो नव, अजयन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः'' (भाग.२।६।२२-२८) इत्यादीनि द्रष्टव्यानि. तस्माद् यागस्य नित्यत्वं स्थिरत्वं च निर्बाधम् इति

**ननु अवघातादयः ऐन्द्रियकाः आशुतरविनाशिनः च इति चेत् न, मन्त्रेणच अवघातो; देवपद्म्यः च कर्त्र्यः, लौकिकेच तदावाहनाद् अतीन्द्रियत्वमेव. फले सम्पन्ने तस्य तिरोभावः.**

---

सिद्धम्. ननु आधुनिकाः क्षणिकं यागम् अङ्गीकुर्वन्ति नैयायि!काः च अदृष्टात्मकं धर्मम्, अतः कथम् एवम्? इत्यतः आहुः ये इत्यादि.

ननु *यदि एवं तदा ''धर्मः स्वनुष्ठितः पुंसाम्'' (भाग.१।२।८) ''धर्मः क्षरति कीर्तनाद'' (       ) इति वाक्ययोः विरोधः. पूर्वस्मिन् अनुष्ठानविषयत्वेन क्षणप्रध्वंसिन्याः क्रियायाः; द्वितीयस्मिन् नाशप्रतियोगित्वेन क्रियाजन्यस्य फलपर्यन्तस्थायिनाम् अदृष्टस्य च विषयीकरणाद् इति* चेत्, न, पूर्ववाक्ये 'स्वनुष्ठित'पदे सुष्ठ्वर्थकेन 'सु'ना अनुष्ठाने वैधप्रकारस्य द्योतनेन तद्विशिष्टा लौकिकी क्रिया विषयीक्रियते, नतु केवला. तथासति प्रकारसाम्येन[१] नित्या क्रियापि जातिवद् आयात्येवेति सैव 'धर्म'पदेन अभिप्रेयते न केवला, अतो न तद्विरोधः. द्वितीयवाक्येपि कीर्तनाद् देवताप्रीतिविषयत्वरूपं धर्मस्य संनिधानं पुरुषात् निवर्तते इति उच्यते. अतो न तस्यापि विरोधः. अतो यागस्य क्षणिकत्वकल्पनं धर्मस्य च अदृष्टत्वकल्पनं पूर्वोक्तप्रकाराज्ञानादेव इति अर्थः. तेन सिद्धम् आहुःभावार्थाः इत्यादि. क्रियार्थेभ्यः क्रिया प्रतीयते इति अनुक्त्वा **भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयते** इति यद् उक्तं, तेन पूर्वोपपादितरीत्या सिद्धावस्थापन्नधात्वर्थबोधकाः ये कर्मशब्दाः इति सूत्रभागस्य अर्थः इति अर्थः. ननु *''अग्नये इदं न मम'' इति त्यागवाक्यानुरोधाद् देवतोद्देशेन द्रव्यत्यागएव यागो अस्तु, दानस्यापि 'यज्य'र्थत्वाद्, देवपूजैव अत्र ग्राह्या न दानम् इत्यत्र नियामकाभावाद् दानश्च प्रत्यक्षमेवेति* कथम् अतीन्द्रियता? इत्यतः आहुः दानम् इत्यादि. उद्देश्यायाः देवतायाः



अतीन्द्रियत्वाद् 'अतीन्द्रियम्' इति लोकप्रयोगो बहिर्दृष्ट्यैव नतु शास्त्रदृष्ट्या अतो न तात्त्विकः इति अर्थः.

क्रियायाः यज्ञरूपायाः यद् अतीन्द्रियत्वम् उक्तं तत्र व्यभिचारम् आशङ्कते ननु इत्यादि. ''व्रीहीन् अवहन्ति'' (द्र.आप.श्रौ.सू.१।१९।११)

---

१. 'साह्येन' इति जूनागढ़पाठः.

**सएव हि अर्थो लौकिकस्तु संसारहेतुत्वाद् अनर्थः. अतएव विधीयते पुरुषः प्रवर्त्यते. अन्यथा प्रयत्नाभावाद् अकथनं स्यात्. तस्माद् भावार्थाः ये कर्मवाचकाः तेभ्यःएव धर्मप्रतीतिः इतरत् तदर्थम्।।२।१।१।।**

---

''अग्निषोमीयं पशुमालभेत'' (तै.सं.६।१।११।६) इत्यादिविहिताअपि ते तथेति तद्दृष्टान्तेन अन्यासामपि क्रियाणां तथात्वस्य शक्यवचनत्वात् पूर्वोक्तम् असङ्गतम् इति अर्थः. तत्र समादधते न इत्यादि. तदावाहनाद् इति ''हविष्कृदेहि'' (मै.सं.१।४।१०।४३) ''उभौ हि देवानां शमितारौ''(तै.ब्रा.३।६।६।४) इत्यादिभिः तत्तत्कर्त्रावाहनात्. **तस्य तिरोभावः** इति अलौकिकक्रियायाः कर्तुश्च संनिधाननिवृत्तिः. तथाच व्यभिचाराभावात् न असङ्गतम् इति अर्थः. **एषह्यर्थो विधीयते** इति सूत्रशेषं व्याकुर्वन्ति **सएव** इत्यादि. **सएव** इति. हिः हेतौ. यो अतीन्द्रियः पुरुषात्मको नित्यः स्थिरः च **एषः** इति पदेन उक्तः **सएव अर्थः** पुरुषार्थः **लौकिकस्तु** न तथा इति अर्थः. ननु अयमेव अर्थः इत्यत्र किं गमकम्? इत्यतः आहुः अतएवइति, यस्माद् एवं धर्मस्वरूपं तस्माद् **विधीयते** पुरुषप्रयत्नेन निष्पाद्यतइति पुरुषः चोदनया तस्मिन् प्रवर्त्यते, **अन्यथा** यदि यागादिः धर्मः स्थिरो न स्यात् किन्तु चेष्टारूपः साध्यएव स्यात् तदा प्रयत्ने **प्रयत्नाभावात्** प्रयत्नसिद्ध्यर्थं प्रयत्नाभावाद् विधिवाक्यस्य कथनमेव न स्यात् यद्धि सिध्यत् स्थिरं भवति तदर्थं यत्नोपदेशः, यत् कदापि न सिध्यति सर्वदैव साध्यवस्थं तत्साधनोपदेशस्य व्यर्थत्वादिति. ननु अपूर्वमेव यागस्य सिद्धावस्था इति चेत्, न, तर्हि तस्य कर्माश्रितत्वापत्तेः सकर्मकधात्वर्थीयसिद्धावस्थायाः कर्मण्येव चोदनादौ प्रायशो दर्शनात् यागस्य अपूर्वपर्यन्तत्वे तस्य करणत्वाय व्यापारान्तरकल्पनापत्तेः च. नच सिद्धान्तेपि अयं दोषः इति वाच्यं, देवताप्रीतेरेव व्यापारत्वाङ्गीकारात्. नच वैयधिकरण्याद् यजमाने तत्फलाभावप्रसङ्गः इति वाच्यं, राजप्रीत्या तत्सेवकेषु फलदर्शनात् यजमानेपि विषयतासम्बन्धेन देवताप्रीतेः सम्भवात् च. अतः सिद्धान्ते

न कोपि दोषः. किञ्च धर्मानित्यत्ववादिमते क्रियात्वादिजातौ पदशक्तिः अङ्गीकार्या, साच वृत्तिमतीति तस्थित्यर्थं धर्मिणः प्रावाहिकी सत्ता अभ्युपगन्तव्या, अहोरात्रन्यायेन कल्पस्य कल्पपूर्वकत्वात्. तद्रात्रि–

**यदि ''भावार्थेभ्यएव धर्मः प्रतीयते'' इति उच्यते तदा सर्वे शब्दाः भावार्थाः –**

**सर्वेषां भावोऽर्थ इति चेत् ।।२।१।२।।**

**क्रियावाचकाश्च सर्वे धातुजाः 'कृत्'प्रत्ययेन च भावो**

---

रूपे प्रलये सर्वनाशात्, ये पुनः जीवन्ति तेषां स्वापात् च; क्रियाप्रवाहस्य उपरमे तस्या जातेः अनाधारत्वापत्त्या कालादौ तत्स्थितिः वा निराधारत्वं वा कल्पनीयम्. शाब्दबोधसमयेच क्रियायाः आक्षेपलभ्यत्वं कल्पनीयम्. कर्मदर्शनादिश्रुतीनाञ्च स्वार्थे तात्पर्यराहित्यं कल्यनीयम्. नित्यत्ववादिमतेतु न केपि एते दोषाः नापि कल्पनेति महानेव गुणः. प्रलये तस्य स्थितिस्तु वेदएव वर्णानां व्यापकत्वाद्यङ्गीकारेण वेदरूपे शब्दे द्रव्यत्वस्य उभयोरपि वादिनोः साधारणत्वात् तत्रैव धर्मसमवायस्य युक्तत्वात्. वेदान्तिमतेतु ''स्वाभाविकी ज्ञानबलक्रिया च'' (श्वे.उ.६।८)इति श्रुतेः ''कालं कर्म स्वभावं च'' (भाग.२।५।२१) इत्यादिपुराणवाक्यात् च; नित्यक्रियायाः ईश्वरधर्मत्वात् परमेश्वरएव स्थितिः यथा निःश्वासरूपेण वेदस्येति. एवंसति कल्पादौ अध्ययनक्रमेण यथा वेदः आविर्भवति तथा अधीतवेदानां यजमानानां क्रियाभिः तत्प्रदेशभेदेन अलौकिकी क्रिया संनिधापिता भवति. येनच यदर्थं यावती स्वक्रियया संनिधाप्यते, तस्य तत्फलभोगपर्यन्तं देवताप्रीतिद्वारा तत्सम्बद्धा अतीन्द्रियैव तिष्ठति इति 'अपूर्व'पदेन 'अदृष्ट'पदेन च शास्त्रे उच्यते – ''अपूर्वं यत् क्रियाफलं धर्माख्यम्'' इति. एवं स्थिरायां तस्यां विधिः पुरुषं प्रवर्तयतीति न किञ्चिद् अनुपपन्नम्. तद् एतत् सर्वम् अभिसन्धाय सिद्धम् आहुः तस्माद् इत्यादि. अर्थस्तु१ सूत्रयोजनया एवं बोध्यः – हि यतो हेतोः, विधीयते पुरुषप्रयत्नेन निष्पाद्यते, एषः धर्मत्वेन विवक्षितोऽर्थः पुरुषार्थत्वेन अभिधेयः. कस्य अभिधेयः ? कश्च धर्मः ? इति आकाङ्क्षायाम् आह भावार्थाः इत्यादि. तथाच सर्वधातुवाच्यक्रियासामान्यार्थकेभ्यो यागादिकर्मवाचकशब्देभ्यः प्रतीयमाना या क्रिया पुरुषनिष्पाद्या सा तेषाम् अर्थः





---

१. ''अर्थस्तु स्पष्टः'' इति जूनागढ़पाठः. इतः आरभ्य ''इत्युक्तं भवति इति'' इत्यन्तः *...* चिह्नान्तर्गतो अंशश्च तत्र न उपलभ्यते.

**अभिधीयतइति पूर्वपक्षिणो मतम् अनुवदति – इति चेद् इति ।।२।१।२।।**

**परिहरति सूत्रद्वयेन. धर्मप्रमितौ भावार्थकर्मशब्दत्वमेव न प्रयोजकं किन्तु पुरुषापेक्षा, पुरुषार्थत्वाद्. अतः सापेक्षानपेक्षविभागम् आह –**

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि**
**तस्मात् तेभ्यः पराकाङ्क्षा न भूतत्वात् स्वे प्रयोगे ।।२।१।३।।**

**'स्व'शब्दो अर्थवाची, षष्ठ्यर्थे सप्तमी. येषां शब्दानाम् अर्थस्य उत्पत्त्यन्तरं प्रयोगकाले रूपम् उपलभ्यते, उत्पन्नं व्यवहारकाले तिष्ठति, तेषां शब्दानां 'नाम' इति संज्ञा, ''नामाख्याते चोपसर्गनिपाताः''**

---

''भावार्थकर्मशब्देभ्यएव धर्मः प्रतीयते'' इत्यत्र शङ्कते इति आहुः यदि इत्यादि. कथं सर्वे भावार्थाः ? इत्यतः आहुः क्रिया...इत्यादि, क्रियावाचिनो 'भ्वा'दयो धातुसंज्ञां लभन्तइति धातवः सर्वे क्रियावाचकाएव, चः अवधारणे. शब्दाश्च सर्वे धातुजाः. नच प्रकृतेः क्रियावाचकत्वेपि प्रत्ययस्य अन्यार्थत्वे प्रकृत्यर्थस्य गुणभूतत्वात् न सर्वेषां क्रियावाचित्वम् इति एवं समाधेयं, 'कृत्'प्रत्ययेनापि **भावो अभिधीयत एव.** यथा – 'पाकः'– 'पाठः' इत्यादि. यत्रच द्रव्यादिकम् अभिधीयते तत्रापि योगविचारे क्रियासाहित्यम् आयात्येव. अतः सर्वेभ्यएव धर्मप्रतीतिः इष्यताम् **इति पूर्वपक्षिणो मतम् इति चेद्** इत्यनेन अनुवदति इति अर्थः ।।२।१।२।।

समाधानम् अवतारयन्ति **परि...** इत्यादि. ननु परिहारे कुतः सूत्रद्वयम् ? इत्यतः आहुः धर्मःइत्यादि. यः कश्चिद् यत्र कुत्रचित् प्रवर्तते तत् फलार्थमेव प्रवर्तते, ''नहि प्रयोजनम् अनुद्दिश्य मन्दोपि प्रवर्तते''इति लोके दर्शनात्. अतो धर्मप्रमित्यर्थमपि यः प्रवर्तिष्यते सोपि किञ्चित् फलार्थमेव प्रवर्तिष्यते[१] भावार्थशब्दैः.

नामभिस्तु उदासीनतया धर्मः प्रत्याय्यते नतु पुरुषार्थतया. अतो धर्मप्रमितिसम्पादने **भावार्थकर्मशब्दत्वमेव न प्रयोजकं** किन्तु पुरुषस्य

१. ''‘प्रवर्त्स्यते’ इत्यपि पाठः''इति आद्यसम्पादकः.

**(नि.१।१।१) इति वचनात्. ''नमन्ति नामयन्ति स्वार्थम् आख्यातार्थम्'' इति ‘नाम’संज्ञा परार्थत्वज्ञापिका. अतः स्वातन्त्र्याभावात् न तेभ्यो धर्मः प्रमीयते इति अर्थः. प्रकृतोपयोगम् आह तस्मात् स्थिरार्थत्वात् तेभ्यो नामपदेभ्यः पराकाङ्क्षा न विद्यते, तच्छ्रवणानन्तरं पुरुषाकाङ्क्षा न भवति. यथा ‘पचति’इति उक्ते ङ्कः ?’इति आकाङ्क्षा, न तथा ‘घटः’इति उक्ते; नापि ‘पाकः’इति उक्ते. निष्पादनार्थं हि पुरुषो अपेक्ष्यते, तेषाम् अर्थस्तु स्वप्रयोगकाले सिद्धः. लक्षणार्थं पूर्वं निरूपितमिति पुनः प्रयोजनकाले कथितम्. तस्मात् पुरुषापेक्षाभावात् पुरुषार्थो धर्मो न तेभ्यः प्रतीयते इति।।२।१।३।।**

या अपेक्षा सापि प्रयोजिका, धर्मस्य पुरुषार्थत्वात्. अतः सापेक्षानपेक्षविभागं सूत्रकृद् अत्र आह, तेन सूत्रद्वयं परिहारे इति अर्थः.

व्याकुर्वन्ति, **स्वशब्दः** स्वीयत्वेन **अर्थवाची** तदन्ते श्रूयमाणा या सप्तमी सा **षष्ठ्यर्थे. उत्पत्तौ** इतितु सति सप्तमी. तथाच **येषां शब्दानाम्** अर्थः उत्पन्नः सन् व्यवहारकाले तिष्ठति **तेषां ‘नाम’ इति संज्ञा,** निरुक्ते ''नामाख्याते...'' इत्यादिशब्दविभागवचनात्. अतः स्वयं नमन्ति कारकतया क्रियाशेषाः वाक्ये भवन्ति. **नामयन्ति** स्वार्थम् आख्यातार्थं प्रति स्वार्थम् आख्यातार्थप्रयोजनाय शेषभूतं कुर्वन्ति **इति ‘नाम’संज्ञा** तेषां शब्दानाम् अर्थस्य१ **ज्ञापिका. अतः** परार्थत्वेन **स्वातन्त्र्याभावाद्** वाक्यार्थबोधावसरे नामभ्यो धर्मः पुरुषार्थतया न प्रमीयते इति अयम् अर्थः ‘नाम’शब्दार्थकथनेन बोध्यते. तस्य बोधनस्य **प्रकृतोपयोगम्** आह **तस्माद्** इत्यादि. तद्व्याख्यानं तच्छ्रवण...इत्यादि. उदाहरणं यथा इत्यादि. **भूतत्वाद्** इत्याद्यंशं विवृण्वन्ति निष्पादन... इत्यादि. ननु एतस्य उपपादनस्य नामलक्षणादेव सिद्धेः पुनः तत्कथनस्य किं प्रयोजनम् अतः आहुः **लक्षणार्थम्** इत्यादि.**प्रयोजनकाले** इति उपपादनावसरे. तथाच वैशद्यार्थं पुनः कथनम् इति अर्थः. सूत्रे यत् सिद्धं तद् आहुः **तस्माद्** इत्यादि. तथाच नामभ्यो अनपेक्षत्वेन स्थिरत्वेन धर्मप्रमितावपि पुरुषार्थत्वेन न प्रमीयते; अतो भावार्थकर्मशब्दत्वं



१ ‘अर्थपदार्थस्य’ इति जूनागढ़ीयः पाठः.

**येषां तूत्पत्तावर्थे स्वप्रयोगो न विद्यते तान्याख्यातानि**
**तस्मात् तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य।।२।१।४।।**

**''पूर्ववद् अत्रापि'' इति पक्षं वारयति ‘तु’शब्दः. येषां शब्दानाम् [उत्पत्तौ !] अर्थोत्पत्त्यनन्तरम् अर्थे प्रयोगो न विद्यते, अर्थं प्रदर्श्य प्रयोगो न विद्यते–यथा ''अयं घटः'' इति उत्पत्तिसमये प्रयोगो न अत्र निषिध्यते–तेषाम् ‘आख्यातः’ इति, यैः धर्मः**

तत्स्वरूपप्रमित्युपयोग्येव नतु पुरुषार्थरूपत्वघटित–तत्प्रमित्युपयोगी इति अर्थः।।२।१।३।।

व्याकुर्वन्ति **पूर्ववद्** इत्यादि, यथा नामभ्यः पुरुषार्थत्वेन अप्रतीतिः तथा आख्यातेभ्योपि इति शङ्कां वारयति इति अर्थः. अत्रापि **उत्पत्तौ** इति सतिसप्तमी आनन्तर्यज्ञापिका. **अर्थे** इति विषयसप्तमी. **स्वप्रयोगः** इति शब्दप्रयोगः. तथासति यः सूत्रार्थः सिध्यति तम् आहुः **येषां शब्दानाम्** इत्यादि. **नात्र निषिध्यते** इति ''पाकं करोति''–''यागं करोति'' इत्यादिप्रयोगदर्शनात् सूत्रे न निषिध्यते. आख्यातः इति इति ‘आख्यातः’ इति एषा संज्ञा. **प्रतीयेत** इति कर्तव्यत्वेन प्रतीयेत. एवं प्रतीतौ हेत्वन्तरम् आह इति आहुः किञ्च इत्यादि. **प्रयोगः** इति अनुष्ठानम्. **भावना** इति उत्पादनात्मिका क्रिया. **स्वनिष्पत्त्यर्थम्** इति स्वप्राकट्यार्थम्. **पुरुषोपि** अर्थ्यते इति धर्मेण पुरुषः आकाङ्क्ष्यते. तथाच ''पुरुषेण फलाय अर्थ्यते'' इति ''पुरुषः स्वनिष्पत्तये अर्थ्यते=अपेक्ष्यते अनेन'' इति च द्वेधा निरुक्त्या पुरुषार्थो धर्मः आख्यातपदैः उच्यते. **तस्मात्** तेभ्यः एव तादृशो **धर्मः** प्रतीयेत. अयम् अर्थः– ‘पचति’इत्यादौ यद्यपि केवलेन धातुना केवलेन आख्यातेन च भावनाप्रतीत्यभावाद्, उभयसमुदायादेव प्रतीतेः कस्य अर्थो भावना इति निश्चेतुं न शक्यते; तथापि ‘पाकः’ ‘पक्तिः’ ‘पचनम्’ इतिप्रत्ययानाम् अन्यान्यत्वेपि धात्वन्वयात् ‘पचनं’ धात्वर्थः. एवं ‘पचति’– ‘गच्छति’–‘स्वपिति’–धातूनाम् अन्यान्यत्वेपि प्रत्ययान्वयाद् भावना आख्यातार्थः इति निश्चीयते. साच साध्यत्वेन अभिधीयमानो व्यापारविशेषः क्रिया–

**आख्यायते इति ज्ञापनार्थम्. तस्माद् विद्यमानार्थत्वात् स्वनिष्पत्त्यर्थं पुरुषाकाङ्क्षायाः विद्यमानत्वात्, तेभ्यः पदेभ्यो धर्मः प्रतीयेत. किञ्च, आश्रितत्वात् प्रयोगस्य, प्रयोगो हि पुरुषाश्रितो भवति, पुरुषप्रयत्नव्यतिरेकेण धर्मो न निष्पद्यते. आख्यातार्थश्च भावना पुरुषधर्मः, अतः स्वनिष्पत्त्यर्थं पुनः-पुनः प्रयोगार्थञ्च पुरुषो अपेक्षितइति, पुरुषार्थो धर्मः तेभ्यः प्रतीयते इति अर्थः. पुरुषेणापि अर्थ्यते – सफलः पुरुषोपि अर्थ्यतइति पुरुषार्थो धर्मः. तस्माद् आख्यातेभ्यएव धर्मः ।।२।१।४।।**

**लिङर्थे विशेषम् आह –**

**चोदना पुनरारम्भः ।।२।१।५।।**

---

**चोदना प्रवर्तकं वाक्यं, तद् धर्मलक्षणत्वेन उक्तं, तस्याः**

सामान्यात्मकः धातुविशिष्टाख्यातेषु तेषु[1] श्रुतेषु क्रियापदम् इति प्रतीतेः. साच प्रतीतिः न धातुनिबन्धना, तेषां क्रियाविशेषार्थकत्वात्. अतो विशेषालिङ्गितत्वेपि क्रियासामान्यम् आख्यतेनैव उच्यतइति आख्यातार्थो भावना. 'पचत्या'दिरूपे आख्यातविशिष्टे पदे श्रुते क्रियान्तराकाङ्क्षानुदयात् क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं यत् तस्य रूपं तदेव साध्यत्वं तेन रूपेण अभिधीयमानो व्यापारः स्वात्मनिष्ठः प्रयत्नः शरीरादिनिष्ठः स्पन्दः च. स यद्यपि नाना क्रमिकः च तथापि समूहात्मना एकबुद्धिविषयत्वाद् एकः. तस्यच पुरुषधर्मत्वं फलोत्पादानुकूलत्वं च प्रत्यक्षादिनैव निश्चीयते. तस्मात् पुरुषार्थो धर्म आख्यातैरेव प्रतीयतइति धर्मप्रमितौ भावार्थकर्मशब्दत्वमात्रं न प्रयोजकं किन्तु पुरुषापेक्षापि प्रयोजिका इत्येतद् बोधनाय अयं विभागः कृतो, नतु नाम्नां धर्मप्रमित्यजनकत्वाय इति अर्थः. तथाच आख्यातानां[2]

पुरुषनिष्पाद्यक्रियावाचकत्वात् तेभ्यएव पुरुषनिष्पाद्यक्रियारूपत्वेन धर्मप्रमितिः इति उक्तं भवति ।।२।१।४।।

---

अग्रिमसूत्रम् अवतारयन्ति लिङर्थे विशेषम् आह इति.

१. 'तेषु' इत्ययं जूनागढीयः पाठः



२. इतः आरभ्य 'भवति' इत्यन्तोंशः सुरतजूनागढयोः नास्ति.

**धर्मत्वपरिज्ञापकत्वम्. अतो विशेष्यत्वेन धर्मो न प्रतिपाद्यतइति विशेषणत्वेनैव धर्मप्रमितिः. तच्च विशेषणत्वम् औदासीन्यप्रच्युत्यारम्भो निष्पादनार्थं प्रवृत्तिः इति एतावान् विशेषः. धर्मप्रमितिस्तु भवत्येवेति न अव्याप्तिः. चोदनातु आरम्भः, लिङर्थस्तु शब्दव्यापारो अभिधालक्षणः पूर्वापरीभावापन्नः. तस्य पुरुषे प्रेरणासम्बन्धः, प्रतीत्यनुरोधेन तथा कल्प्यते. त्रेधाहि पुरुषः प्रवर्तते. पुरुषश्च त्रेधा भवति –(१)काममयो (२)वैदिको (३)दुःखासहिष्णुः च – इति.**

**(१)तत्र 'स्वर्गकाम'पदाद् आद्यः.**

**(२)विधेः द्वितीयः.**

**(३)अर्थवादैः तृतीयः प्रवर्तते.**

---

[1] * ननु नामाख्याताभ्यां सिद्धतया साध्यतया च धर्मः प्रमीयते, चोदनयातु तत्र प्रवृत्तिमात्रं जन्यते. किञ्च लक्षणं हि असाधारणो लक्ष्यनिष्ठधर्मः, चोदनातु वाक्यरूपत्वाद् वेदादिनिष्ठा नतु धर्मनिष्ठा इत्यतोपि तस्याः कथं धर्मलक्षणत्वम्? इति आकाङ्क्षायां तस्याः लक्षणत्वार्थं लिङर्थे विधौ प्रवर्तकत्वेपि वक्ष्यमाणरीत्या प्रमितिजनकत्वं रूपं विशेषम् आह इति अर्थः. तमेव विशेषं व्युत्पादयन्ति चोदना इत्यादि, चोदना हि प्रवर्तकं वाक्यं धर्मलक्षणत्वेन

---

१. इतः आरभ्य *...* एतच्चिह्नान्तर्गतो अंशः सुरतपाठे नास्तीति पश्चात्तनः इति प्रथममुद्रितसंस्करणसम्पादकाभिप्रायः, जूनागढीये पाठेपि नास्ति. सोऽयं पाठः सुरतजूनागढयोः एवम् उपलभ्यते : प्रवर्तकत्वरूपं विशेषम् आह ''चोदना पुनरारम्भः'' तमेव विशेषं व्याकुर्वन्ति 'चोदना...' इत्यादि. चोदना हि प्रवर्तकं वाक्यं धर्मलक्षणत्वेन शास्त्रारम्भे उक्तम्. अतः चोदनया विधेयत्वेन स्वविषयत्वम् आख्यातपदोक्तायां क्रियायां['...पदोक्तया क्रियया' इति जूनागढीयो विशेषः] ज्ञाप्यते – ''विधेयत्वेन चोदनाविषयो अर्थो धर्मः'' इति. अतः तस्याः धर्मत्वपरिज्ञापकत्वम्. अतो भावार्थैः कर्मशब्दैः यागो दानं होमः इत्यादिभिः यथासिद्धत्वेनैव धर्मप्रमितिः. तच्च विशेषणम् उक्तरीत्या आरम्भः. सोपि एवं प्रवृत्तिरिति एतावान् लिङर्थो ['लिङर्थे'इति जूनागढीयो विशेषः] विशेषः इति अर्थः.

नच एवं तस्याः धर्मत्वज्ञापकत्वेन धर्मज्ञापकत्वाभावाद् अव्याप्तिः लक्षणे शङ्कनीया, उक्तरीत्या विशेषणत्वेन धर्मप्रमितिस्तु भवत्येवेति अव्याप्तिदोषस्य अभावाद्. एवं विशेषम् उपपाद्य...

**वैदिकत्वे ब्रह्मानन्दः फलम्, ''ईश्वरः प्रवर्तयति'' इति मतं**

शास्त्रारम्भे उक्तम्. तच्च पुरुषप्रवृत्तिविषयत्वेन धर्मं प्रतिपादयतीति तस्याः चोदनायाः तस्मिन् पुरुषधर्मत्वपरिज्ञापकत्वम्. अतः तया लिङंशेन आख्यातवत् कारकविशेष्यतया धर्मो न प्रतिपाद्यतइति तेन रूपेण धर्मप्रमित्यजननेपि पुरुषविशेषणत्वेनैव धर्मप्रमितिः. नहि तया तस्मिन् पुरुषधर्मत्वे अज्ञापिते तत्र पुरुषप्रवृत्तिः सम्भवति. लौकिके 'घटानयनादि'वाक्योक्ते अर्थे ज्ञातुरेव प्रवृत्तिदर्शनात्. तर्हि तस्य विशेषणस्य किं स्वरूपम् ? इति चेत्, तच्च विशेषणत्वम् औदासीन्यप्रच्युत्यारम्भः, तन्निष्पादनार्थं प्रवृत्तिः इति एतावान् लिङर्थे विशेषः. तथाच अनया रीत्या तया धर्मप्रमितिः भवतीति तस्मिन् लक्षणत्वं निर्बाधम्. नच वैयधिकरण्यदोषः, ''**चोदनालक्षणो**...''(जै.सू.१।१।२) इत्यत्र चोदनाप्रमितत्वस्यैव विवक्षितत्वेन तदभावाद् इति अर्थः. ननु सिद्धस्वभावे स्थिरे धर्मे चोदनाप्रत्यायितप्रवृत्तिविषयत्वाभावाद् लक्षणे अव्याप्तिः इति चेत्, तत्र आहुः **धर्मप्रमितिः** इत्यादि. चोदनाप्रत्यायित-प्रवृत्तिविषय-क्रियाभिव्यङ्ग्यत्वेन रूपेण स्थिरस्यापि धर्मस्य प्रमितिः भवत्येवेति स्थिरेपि चोदनाप्रमितत्वस्य सम्भवात् न अव्याप्तिः इति अर्थः. एवं विशेषं व्याख्याय, सूत्रं व्याकुर्वन्ति चोदनातु इत्यादि. सूत्रे **पुनः**शब्दः 'त्व'र्थो विशेषम् अवधारयति, **चोदनातु** प्रथमतः प्रवृत्तिजनकत्वाद् आरम्भः इति अर्थः. पूर्वं चोदनालक्षणत्वेन धर्मस्य विवृतत्वेपि चोदनास्वरूपस्य अनुक्तत्वात् तद् इदानीम् उक्तम्. ननु आख्यातत्वाविशेषेपि लिङर्थे कुतो अयं विशेषः इत्यतः आहुः लिङर्थः इत्यादि, यथा आख्यातानां भावनालक्षणः क्रियारूपो अर्थव्यापारो अभिधेयः तथा लिङो अभिधालक्षणः. [क]अङ्गैः कर्म भावयेत् [ख]कर्मणा फलं भावयेद्, इति पूर्वापरीभावापन्नः शब्दव्यापारो अभिधेयः. तादृशेन शब्दव्यापारेण पुरुषः कर्मणि प्रवर्ततइति तस्य पुरुषे प्रेरणासम्बन्धः. नच अत्र मानाभावः, ''घटम् आनय'' इत्यादिशब्दश्रवणानन्तरभाविन्यां प्रवृतौ - ''अयं मां प्रवर्तयति'' इति प्रतीतेः तदनुरोधेन वेदेपि तथा कल्प्यते. ननु वेदे तथा इति कथम् अवगन्तुं शक्यते ? इति आकाङ्क्षायां तद् व्युत्पादयन्ति त्रेधा इत्यादि. एतेन फलकामनायाः अर्थवादानां च न सर्वत्र उपयोगः इति बोधितम्. इदञ्च



''अग्निहोत्रं जुहोति'' (तै.सं.१।५।९।१)

**दृष्टविरोधि; एवम् आख्यातपदेभ्यो धर्मः अन्यानि च तदुपकारकाणि इति उक्तम्।।२।१।५।।**

**।।इति प्रथममपूर्वस्य आख्यातप्रतिपाद्यत्वाधिकरणम्।।१।।**

इत्यादिभिः कामपदार्थवादशून्यैः केवलकर्मबोधवाक्यैः अवसीयते. नच कामनाभावे फलाभावः शङ्क्यः, ''एतान्यपि तु कर्माणि'' (भ.गी.१८।६) इत्यादिभिः स्मृतिवाक्यैः तस्य तादृक्फलनिश्चयात्. ननु एवंसति ''एषएव साधु कर्म कारयति'' (कौ.उ.३।८) इति श्रुत्यक्तम् ईश्वरस्यैव प्रवर्तकत्वं कुतो न आद्रियते ? इत्यतः आहुः ईश्वरः इत्यादि. तथाच लौकिकानां दृष्टएव विश्वासात् जैमिनेश्च तादृशामेव यथाकथञ्चिद् वेदसम्मुखीकरणार्थं प्रवृत्तत्वात् तदनादरः इति अर्थः. एवम् अन्यत्रापि बोध्यम्. यदि जैमिनेः अयम् आशयो न स्यात् तदा उपासनासूत्रेषु जैमिनीये अश्वमेधपर्वणि च ब्रह्ममाहात्म्यं भगवन्माहात्म्यं च किमिति वदेत् ? अतो, ये इतो अन्यथा निरूपयन्ति, ते स्वभ्रान्तिं जैमिनौ आरोपयन्ति इति दिक. सिद्धम् आहुः एवम् इत्यादि. तेन इदं सिध्यति - सिद्धावस्थापन्नधात्वर्थरूपक्रियात्मको धर्मः उदासीनो नामपदेभ्यः प्रतीयते, साध्यावस्थापन्नधात्वर्थः क्रियात्मकः पुरुषापेक्षः पुरुषार्थरूपः **आख्यातपदेभ्यः**. तत्रापि लिङंशेन आरभ्यतया, अतः पुरुषार्थतया तदारभ्यतया च प्रतीतिजननाद् आख्यातपदानि प्रमितिजनने मुख्यानि. नामपदानितु सिद्धतद्बोधकतया **तदुपकाराकाणि** इति निष्कर्षः.

अन्येतु अधिकरणद्वयम् अत्र कल्पयन्ति. तत्र प्रथमे अखिलम् अदृष्टार्थं विधिवाक्यम् उदाहरणम्:-

तत्र ''किं सर्वैः पदैः अपूर्वं प्रतिपाद्यते उत एकेन ? यदापि एकेन तदापि, किं 'द्रव्यादि'वाचिना 'भावना'वाचिना वा ?'' इति सन्देहे, ''एकेन 'भावना'वाचिना'' इति सिद्धान्तः. द्वितीये तु अपूर्वसदसद्भावे संशयः, यागस्य क्रियारूपत्वेन त्रिक्षणावस्थायितया कालान्तरभाविफलजननासामर्थ्यात् मध्ये व्यापाररूपम् अपूर्वं द्वारं कल्प्यते अतो अस्ति इति सिद्धान्तः.

तद् इदं सूत्रविरुद्धं, सूत्रेषु 'अपूर्व'वाचकपदाभावात्, आख्यातानां क्रियासामान्यवाचितया समानपदोपात्तस्य धातोः च अतीन्द्रियतद्विशेषवाचितया तन्निष्ठस्य करणत्वस्य देवताप्रीतिरूपव्यापारेण सिद्ध्या अनुपपत्त्यभावात्.

( द्वितीयाधिकरणम् )

**तानि सर्वाण्येव फलं साधयन्ति उत कानिचिदेव इति आशङ्क्य प्रधानाप्रधानभेदेन विभजति प्रधानादेव फलम् इति ज्ञापयितुं –**

**तानि द्वैधं गुणप्रधानभूतानि ।।२।१।६।।**

**तानि आख्यातवाक्यानि द्विविधानि गुणभूतानि=अप्रधानभूतानि प्रधानभूतानि च ।।२।१।।६।।**

---

''साधकतमं करणम्'' (पाणि.सू.१।४।४२) इति करणलक्षणाङ्गीकारेतु व्यापारापेक्षैव नास्ति, स्वरूपेणैव निर्वाहाद् आख्यातपदैः तत्कल्पनस्य अशक्यत्वात्. पुरुषप्रवृत्तेस्तु यागादिव्यञ्जकतया तदेकदशत्वमेव नतु यागादिरूपत्वम्. यथाहि उद्यमन-निपतन-रूप-पुरुषव्यापार-सहकृतेन परशुना आघातात्मकदृढसंयोगद्वारा छिदा साध्यते, तथा चोदनाप्रयुक्त-पुरुषव्यापाराभिव्यक्तेन यागेन देवताप्रीतिद्वारा फलं साध्यते. दृष्टान्ते फलस्य साध्यत्वं दार्ष्टान्तिके आप्यत्वम् इति एतावान् विशेषः. अतः तेनापि तत्कल्पनायाः अशक्यत्वादिति ।।२।१।५।।

।।इति भावार्थपादभाष्यविवरणे प्रथमाधिकरणम् ।।

अधिकरणम् अवतारयन्ति तानि इत्यादि. [''व्रीहीन्]अवहन्ति''(आप.श्रौ.सू.१।१९।११), ''तण्डुलान् पिनष्टि''(आप.श्रौ.सू.१।२१।५-७) इत्यादिभिः विहितानि यानि कर्माणि तान्यापि अग्निहोत्रादिवत् फलसाधकानि उत कानिचिदेव ? इति आशङ्क्य,''विधेयत्वेन चोदनाविषयत्वस्य तेष्वपि तुल्यवात् सर्वाण्येव तथा'' इति पूर्वपक्षे, तदभावाय विभजति इति अर्थः. त्रिसूत्रम् इदम् अधिकरणम्।।२।१।६।।

तत्र द्वितीयं सूत्रम् अवतारयन्ति तत्र इत्यादि. सूत्रं व्याचिकीर्षन्तः प्रधानाप्रधानविभागे हेतुं बोधयितुम् आहुः **प्रधानम्** इत्यादि. श्रुते फले ततएव तस्मिन् कामना उत्पद्यते न इतरस्मादिति इतराप्रयुक्तेच्छा **निरुपधीच्छा** तस्याः



**विषयः** फलमेव, साधनन्तु तदुपायत्वेन. अन्यानितु

**तत्र प्रधानभूतानि लक्षयति –**

**यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ।।२।१।७।।**

**प्रधानं फलं तत्साधकञ्च प्रधानं, द्रव्यम् अप्रधानं तत्साधकञ्च अप्रधानम्. पुरुषस्य निरुपधीच्छाविषयएव प्रधानम्. यैः द्रव्यं न चिकीर्ष्यते संस्कर्तुं पुरुषेच्छा न जन्यते किन्तु संस्कृतस्य द्रव्यस्य देवतासम्बन्धो बोध्यते, तानि प्रधानभूतानि. ननु द्रव्यदेवतासम्बन्धो यागः, तत्र द्रव्यमेव प्रधानं सम्बन्धस्य धर्मत्वेन गुणत्वात्, सम्प्रदानस्यापि द्रव्यम् अभीष्टं ''विप्राय गां ददाति'' इत्यत्र गोः प्राधान्याद् इति आशङ्क्य आह द्रव्यस्य गुणभूतत्वात्, द्रव्यं यथासुखं व्यवह्रियतइति गुणभूतमेव. 'गाम्' इत्यत्र ततः परं यथेष्टविनियोगाभावात् दानकर्मता, न एतावता द्रव्यस्य प्राधान्यम् ।।२।१।७।।**

**गुणभूतानि लक्षयति –**

**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ।।२।१।८।।**

**'तु'शब्दः प्राधान्यं वारयति. द्रव्यं चिकीर्ष्यते संस्क्रियते द्रव्यम् उद्दिश्य संस्कारो विधीयते तेषु वाक्येषु गुणः गुणभूतानि कर्माणि प्रतीयन्ते इति अर्थः. तत्र हेतुः तस्य द्रव्यप्रधानत्वात्, तेषां कर्मणां द्रव्यमेव[१] प्रधानं संस्कार्यत्वात्, स्वयम् अप्रधानं**

---

उपायोपायत्वेनेति इच्छाविशेषविषयत्वमेव विभागे हेतुः इति अर्थः. व्याकुर्वन्ति यैः इत्यादि, **संस्कर्तुम्** इति द्रव्यं संस्कर्तुम्. हेतुम् अवतारयन्ति **ननु** इत्यादि. द्रव्यस्य गुणभूतत्वं साधयन्ति **द्रव्यम्** इत्यादि ।।२।१।७।।

१. द्रव्यत्वमेव इत्यपि पाठः.

**संस्कारकत्वात्. एकवचनं प्राधान्यबोधनाय[१], अस्य विचारस्य प्रयोजनम् अतिदेशो भवति. यदि अवघातोपि मुख्यो विकृतौ 'प्रैय''वचनेन अतिदिश्येत अप्रधानकर्मणाम् अनतिदेशात्, अप्रधान्येतु 'प्रैय''वचनादपि अवघातः. अयञ्च अङ्गविचाराद् भिन्नः. अन्यथा प्रयाजादीनां प्रधानत्वेन अतिदेशो न स्यात्. तथाच द्रव्यसंस्कारासंस्कारत्वेनैव विभागः ।।२।१।८।।**

**।।इति द्वितीयं कर्मणां गुणप्रधानभावविभागाधिकरणम्।।**

**(तृतीयाधिकरणम्)**

**धर्ममात्रे तु कर्म स्यादनिवृत्तेः प्रयाजवत्।।२।१।९।।**

**''स्रुवं[२] सम्मार्ष्टि'' (तै.ब्रा.३।३।१) ''परिधीन्त्सम्मार्ष्टि''(तै.सं.२।६।९।१) ''यत्पुरोडाशः... पर्यग्नि करोती''(तै.ब्रा.३।२।८।५) इत्यादि श्रूयते. तत्र द्रव्ये विकारो न जायतइति संस्कारकर्मत्वम् एषाम् उत न इति ? अस्मिन् विचारे पूर्वपक्षम् आह धर्ममात्रेतु फलं कर्मैव भवतु. 'तु'शब्दः पूर्वप्राप्तार्थनिषेधकः. यत्र धर्ममात्रं क्रियते नतु द्रव्यं विक्रियते, नच सम्मार्जनेन स्रुवो अन्यथा भवति.**

---

तृतीयम् अवतारयन्ति गुणः इत्यादि.

**एकवचनं प्राधान्यबोधनाय** इति. **'गुणः'** इति **'तस्य'** इतिच एकवचनं [३]द्रव्यस्य प्राधान्यबोधनाय इति अर्थः. वस्तुतस्तु 'अप्राधान्यबोधनाय' इति पाठः प्रतिभाति. विचारप्रयोजनम् आहुः अस्य इत्यादि. 'प्रैय''वचनाद् इति, ''प्रैयङ्गवं चरुं निर्वपेद्'' (तै.सं.२।२।११।४) इति वचनात्. तत्रापि चरुनिष्पत्त्यर्थं प्रियङ्गवैतुष्याय अवघातस्य अपेक्षितत्वात् तथा इति अर्थः. नियमप्रयोजनन्तु यागस्वरूपाभिव्यक्तिः, अवघातनिष्पन्नेनैव द्रव्येण यागो अभिव्यज्यते न अन्यथा इति बोध्यम्. अन्यमपि विशेषम् आहुः अयञ्चइत्यादि,

---



१. 'अप्राधान्यबोधनाय' इति विवरणकाराभिप्रायः.

२. ''स्रुचः सम्मार्ष्टि स्रुवमग्रे'' इति श्रौतः पाठः. ३ तस्यापि इति जूनागढे.

**तस्मात् सम्मार्जनादिकं फलं कर्म. यथा प्रयाजाः न द्रव्यं संस्कुर्वन्ति, तत्र हेतुः अनिवृत्तेः नहि सम्मार्जनादिभिः पूर्वरूपं तस्य निवर्तते ।।२।१।९।।**

**तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात्।।२।१।१०।।**

**वा इति पक्षं व्यावर्तयति. सम्मार्गोपि अवघाततुल्यः सधर्मः समानधर्मः, द्रव्यसंस्कारकः स्यात्. तत्र हेतुः तुल्यश्रुतित्वात्, द्वितीयान्तपदेन उभयत्रापि द्रव्यम् उद्दिश्यते ''[व्रीहीन्]अवहन्ति'' (आप.श्रौ.सू.१।१९।११) '' स्रुवं सम्मार्ष्टि'' (तै.ब्रा.३।३।१) इति; अतः, इतरैः अवघातादिभिः सधर्मः, द्रव्यम् उद्दिश्य संस्कारत्वेन मार्जनं विधीयते इति ।।२।१।१०।।**

**द्रव्योपदेश इति चेत्।।२।१।११।**

**ननु न अत्र द्रव्यम् उद्दिश्य सम्मार्जनं विधीयते किन्तु मार्जनम् उद्दिश्य द्रव्यमेव स्रुवादिकं विधीयते. द्वितीयाश्रुतिस्तु यत्रैव प्राधान्यविवक्षा तत्रैव भवति : [क]द्रव्ये [ख]देवतायां गकर्मणि च –**

**[क]''अञ्जलिना सक्तून् प्रदाव्ये जुहुयात्'' (तै.सं.३।३।८।४), ''दशान्नानि जुहोति''(तै.ब्रा.३।८।१४।६) ''सोमं यजति'' (तै.सं.२।६।१०।५).**

---

तथाच उक्तरीत्यैव प्रधानाप्रधानविभागो नतु अङ्गाङ्गित्वेन इति अर्थः ।।२।१।८।।

।।इति द्वितीयं कर्मणां गुणप्रधानभावविभागाधिकरणम्।।

चतुःसूत्रम् इदम् अधिकरणम्. तत्र विषयादिकम् आहुः **स्रुवम्** इत्यादि. **पूर्वपक्षम् आह** इति पूर्वसूत्रेण आहुः **धर्ममात्र...** इति विहितक्रियामात्रकरणे.

**पूर्वप्राप्तार्थनिषेधकः** इति गुणकर्मत्वनिषेधकः. स्फुटम् अन्यत् ।।२।१।९।।

**[ख]''त्वष्टारं यजति'' (तै.सं.२।६।१०।३).**

**[ग]''अग्निहोत्रं जुहोति'' (तै.सं.१।५।९।१), ''प्रयाजान्... यजति'' (आप.श्रौ.सू.७।१४।४।प.५).**

**तस्माद् द्वितीयाश्रुतेः अनियामकत्वात् स्रुवादिद्रव्यमेव विधीयते इति चेत् ।।२।१।११।।**

**परिहरति –**

**न तदर्थत्वाल्लोकवत् तस्यच शेषभूतत्वात् ।।२।१।१२।।**

**न इति, द्रव्यं न अत्र विधातुं शक्यते. तत्र हेतुः, तदर्थत्वात् द्रव्यार्थत्वात् सम्मार्जनस्य. योहि यदर्थः सएव तदुद्देशेन विधीयते. ननु किम् अत्र नियामकं, द्रव्यं मार्जनार्थं न भवति किन्तु मार्जनमेव द्रव्यार्थम्? इति आशङ्क्य आह लोकवत्, लोकेहि गृहार्थमेव मार्जनं नतु मार्जनार्थं गृहनिर्माणमिति. ननु लोके स्पर्शनार्थं गौः आनीयते. अतः उभयमपि अस्तीति किं नियामकम्? इति चेत्, तत्र आह तस्यच शेषभूतत्वात् तस्य स्रुवादेः दशपूर्णमासशेषभूतत्वात्, संस्कृतंहि द्रव्यम् उत्तरत्र उपयुज्यते; अतः प्रकरणमेव नियामकम्. ''परिधीन्त्सम्मार्ष्टि पुनात्येवैनान्'' (तै.सं.२।६।९।१) पवित्रंहि द्रव्यम् अग्रे उपयुज्यतइति. अग्नेरपि सम्मार्जनं भस्मदूरीकरणार्थं रक्षसाम् अपहत्यै, पर्यग्निकरणं च सर्वहुतार्थम् अस्कन्दाय. अतो द्रव्याणां शेषभूतत्वात् संस्कारः तदर्थः ।।२।१।१२।।**

**।।इति तृतीयं सम्मार्जनादीनामप्रधानताधिकरणम् ।।**

---

एतत्सूत्रद्वयभाष्यन्तु प्रकटार्थम् ।।२।१।१०-११।।

**एनान्**[1] इति परिधीन्. **अस्कन्दाय** इति भूमौ तदपाताय. श्रुतिलिखनेन सम्मार्गादीनां यागस्वरूपोपकारित्वं स्फुटीकृतं, आर्थवादिकं फलं च अङ्गीकृतम्.

---



१. 'एतान्' इति मुद्रितादिसार्वमातृकः पाठः.

**(चतुर्थाधिकरणम्)**

**स्तुतशस्त्रयोः[1] संस्कारो याज्यावद् देवताभिधानत्वात्[2] ।।२।१।१३।।**

**द्रव्यसंस्कारो विचारितो. देवतासंस्कारो विचार्यते – ''आज्यैः स्तुवते'' ( ), '' पृष्ठैः स्तुवते'' ( ), ''प्रउगं शंसति''(शाङ्खा.ब्रा.१४।४), ''निष्कैवल्यं शंसति'' (द्र.: आप.श्रौ.सू.१४।१९।१०) इत्यादि.**

**तत्र सन्देहः – किं स्तोत्रशस्त्रे संस्कारार्थे उत प्रधानकर्मणी फलार्थे? तत्र पूर्वः पक्षः स्तुतशस्त्रयोः संस्कारः प्रतीयते, ग्रहदेवताः एताभ्यां संस्क्रियन्ते. यथा सस्कृतं विप्रं दानेन अभिप्रैति तथा स्तुतां ग्रहदानेन अभिप्रैति. ननु तत्र अतिशयाधानं मलापकर्षणं वा न क्रियतइति कथं संस्कारः? तत्र आह याज्यावत्, याज्यायां द्रव्यसम्बन्धित्वेन देवता निरूप्यते प्रकृतहविर्ग्रहणार्थं, साहि स्वधर्मं स्मारिता हविः गृह्णाति. अन्यथा पुष्टा[अपृष्टा !] सा न गृह्णीयात्. तथा स्तुता शस्ता च प्रोत्साहयुक्ता गृह्णीयात्. प्रोत्साहएव संस्कारः. ननु गुणाएव अत्र उच्यन्ते न देवता ! इत्यतः आह देवताभिधानत्वात्, गुणकथनेन देवतैव मुख्यतया अभिधीयते, गुणानां परार्थत्वात्. अतो**

---

शेषं स्फुटम् ।।२।१।१२।।

।।इति तृतीयं सम्मार्जनादीनाममप्रधानताधिकरणम् ।।

सप्तदशसूत्रम् इदम् अधिकरणं तत्प्रयोजनम् आहुः **द्रव्य...** इत्यादि. विषयम् आहुः **आज्यैः** इत्यादि. इदं ज्योतिष्टोमे श्रूयते. 'आदि' पदम् अन्येषामपि सङ्ग्राहकम्. तेन सर्वाणि स्तोत्राणि शस्त्राणि च अत्र उदाहरणम्. तत्र प्रगीतमन्त्रसाध्या स्तुतिः 'स्तुतं/स्तोत्रम्' इति उच्यते. अप्रगीतमन्त्रसाध्या स्तुतिः 'शस्त्रम्' इति. तत्र 'आज्य'-'पृष्ठ' शब्दौ स्तोत्रविशेषनामनी. 'प्रउग'-'निष्कैवल्य' शब्दौ शस्त्रविशेषनामनी.

---

१. स्तुतशस्त्रयोस्तु इति उपलब्धः पाठः २. देवताभिमानात्

**देवतासंस्कारः स्तुतशस्त्राभ्याम् ।।२।१।१३।।**

**अर्थेनतु अपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ।।२।१।१४।।**

**'तु'शब्दः पक्षं व्यावर्तयति. देवतासंस्कारपक्षं यत्र देवता तत्र ''इन्द्रस्य नु वीर्याणि'' (ऋ.सं.१।३२।१–१५) इति पञ्चदशं च तथा ''इन्द्रस्येव विदः इन्द्रो यात''( ) इति परिधानीया. अत्र महेन्द्रस्य नामापि न श्रूयते. तथा अन्यत्रापि ग्रहदेवतैव स्तूयतइति न नियमः. तथापि निर्बन्धे यत्र ऐन्द्रएव ग्रहो, मरुत्वतीये उक्थे वा, तत्रैव स्तुतिशस्त्रे अपकृष्येयाताम्. ननु प्रधानपक्षेपि मन्त्रलिङ्गात् कथं न अपकृष्यते ? इति चेत् तत्र आह अचोदनार्थस्य गुणभूतत्वात्, चोदनार्थः प्रधानं, तल्लिङ्गाद् न अपकृष्यते. यथा ''ऐन्द्रिया गार्हपत्यमुपतिष्ठते'' (मै.सं.१।५।११) इति चोदनार्थः तृतीयान्तः. द्वितीयान्तः तदतिरिक्तः ''निष्कैवल्यं शंसति'' (द्र.: आप.श्रौ.सू.१४।१९।१०) इति. स गुणभूतइति अपकृष्येत. अतो न संस्कारः ताभ्याम् ।।२।१।१४।।**

---

सन्देहम् आहुः तत्र इत्यादि, देवतासंस्कारार्थे गुणकर्मणी उत प्रधानकर्माणि ? इति. पूर्वः पक्ष इति सूत्रोक्तः **पूर्वपक्षः. न क्रियते** इति सम्मार्गावघाताभ्यामिव न क्रियते. अतः इति गुणानां देवताप्रोत्साहार्थतया याज्यायाम् इव अत्रापि देवतायाएव मुख्यत्वात्. तथाच स्तुतशस्त्रे गुणकर्मणी इति अर्थः ।।२।१।१३।।

व्याकुर्वन्ति **'तु'शब्दः** इत्यादि. पूर्वाधिकरणे ''धर्ममात्रेतु कर्म स्याद्...'' (जै.सू.२।१।९) इति सूत्रे 'तु'शब्दः पूर्वप्राप्तसिद्धान्तवारकत्वेन दृष्टइति इहापि तथा इति सन्देहो माभूद् इत्यतः आहुः **देवतासंस्कारपक्षम्** इति. तथाच अयम् अर्थः – स्तुतशस्त्रं यदि मन्त्रोक्तदेवतासंस्कारः स्यात्, तदा तदतिरिक्तदेवतानाम् अर्थे न अपकृष्येत. यस्माद् अन्यार्थे अपकृष्यते, तस्माद् न देवतासंस्कारः इति. अपकर्षो नयनम्. तद् एतद् व्युत्पादयन्ति यत्र इत्यादि, यत्र स्तोत्रमन्त्रे देवता तत्र



''इन्द्रस्य नु वीर्याणि'' (ऋ.सं.१।३२।१–१५)इति.

**पुनः शङ्कते ''इन्द्रएव महेन्द्रः'' इति, महत्त्वं गुणो, यथा महाराजो महाब्राह्मणः इति, तर्हि गुणविशिष्टं परित्यज्य केवलः कथं स्तूयते ? तत्र आह –**

**वशावद् वा गुणार्थत्वात्[१] ।।२।१।१५।।**

**वशावद्,[इति!] ''सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत''(तै.सं.३।४।३।२) इति यागे ''छागस्य वपायाः मेदसो जुषतां हविः'' (तै.ब्रा.३।६।८।१) इति निगदो भवति; तथा**

---

इन्द्रस्य नाम पञ्चदशं पञ्चदशस्तोमयुक्तं स्तोत्रं तदपि इन्द्रस्यैव गमकम्. ''इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन'' (तै.सं.३।५।३।१) इति विष्णुक्रममन्त्रे दर्शनात्. एतेषु महेन्द्रस्य नामापि न श्रूयते, गीयते च महेन्द्रग्रहयजिसंनिधौ. संस्कारपक्षेतु तत्र न अपकृष्यते. तथा अन्यत्रापि स्तोत्रे ग्रहदेवतैव स्तूयते इति न नियमः तथापि चेत् संस्कारनिर्बन्धः क्रियते तदा इन्द्रग्रहयजिस्थलएव अपकृष्येत. तद् उभयमपि विरुद्धम्. अत्र आशङ्कते ननु इत्यादि. न अयं निष्प्रमाणको निर्बन्धोपितु देवतालिङ्गं च प्रधानपक्षेपि तुल्या शिष्टचारस्तु न लिङ्गापेया प्रबलइति तत्रापि अपकर्षः प्राप्नोति इति अर्थः. समाधायकं हेतुं व्याकुर्वन्ति चोदनार्थः इत्यादि. अत्रहि 'स्तौति'–'शंसति'पदोक्ता स्तुतिः चोदनार्थः इति प्रधानम्. देवतातु तदभावाद् गुणभूता. अतो लिङ्गस्य गुणभूत्वात् तेन इन्द्रग्रहे तदपकर्षो न युक्तइति चोदनार्थानुगृहीतत्वात् शिष्टाचारो न निर्बलः इति अर्थः. उभयोः गुणप्रधानभावस्य श्रुत्यभिप्रेतत्वाय दृष्टान्तम् आहुः यथा इत्यादि. अत्रहि उपस्थानं चोदनार्थः. 'उपस्थानं' नाम समीपे स्थित्वा स्तवनम्. तृतीयान्तो द्वितीयान्तः तस्माद् भिन्नः. यदि स भिन्नो अर्थः प्रधानं स्यात् तदा अन्यार्थया ऋचा अन्योपस्थानं श्रुतिः न वदेत्. तथाच लिङ्गबलाद् ऐन्द्रग्रहस्थलस्तुतास्त्रापकर्षो न युक्तः. ''निष्कैवल्यं शंसति'' (आप.श्रौ.सू.१४।१९।१०) इति शस्त्रं चोदनार्थत्वात् प्रधानम्. स देवतारूपो अर्थो गुणभूतइति चोदनानुरोधेन

---

१. ''वशावद्वा गुणार्थं स्याद्'' इति प्रसिद्धः पाठः.

**सगुणोपि केवलः स्तूयते. तत्र हेतुः गुणार्थत्वात् गुणकथनार्थं देवता गृह्यते. तत्र गुणस्य ग्रहणं व्यर्थं, नहि जलानयनार्थी गृहात् सजलं भाण्डं नयति. ''गुणार्थं स्याद्'' इति पाठे – ''स्तुतशस्त्रसंस्कारार्थमेव स्याद्'' इति पूर्वपक्षार्थानुवादः. तस्माद् इन्द्रमहेन्द्रयोः अभेदात् संस्कारपक्षेपि न दोषः ।।२।१।१५।।**

**परिहरति –**

**न श्रुतिसमवायित्वात् ।।२।१।१६।।**

**न इति, न महेन्द्रः इन्द्रो भवितुम् अर्हति. तत्र हेतुः श्रुतिसमवायित्वात्, श्रुतौ 'माहेन्द्र'पदे तद्धितान्ते महत्त्वलक्षणो गुणः समवेतः, तेन वा इन्द्रः स केवलः पृथक् कर्तुं न शक्यते,**

---

सो अपकृष्येत. अतः स्तुतशस्त्राभ्यां न देवतासंस्कारः इति अर्थः ।।२।१।१४।।

सूत्रम् अवतारयन्ति **पुनः शङ्कते** इति. यद् उक्तं ''संस्कारत्वे माहेन्द्रग्रहयजिस्थले ऐन्द्रस्तुत्यपकर्षो न उपपद्यते'' इति तद् अयुक्तं, यतः इन्द्रएव महेन्द्रइति महत्त्वं गुणः. यथा राजैव ब्राह्मणएव महत्त्वगुणयोगेन 'महाराजो' 'महाब्राह्मणः' इति. तथाच इन्द्रमहेन्द्रयोः ऐक्यात् तत्र इन्द्रस्तुत्यपकर्षेपि न संस्कारत्वहानिः इति अर्थः. किञ्चिद् आशङ्क्य परिहरति तर्हि इत्यादि. **इति यागे** इति एतद्वाक्यं विहिते वशाद्रव्यके यागे, ''वशा, व्रध्या,निगदः'' इति परप्रत्यायनार्थो मन्त्रः. **देवता गृह्यते** इति. तथाच देवतयैव गुणाः आयास्यन्ति इति अर्थः. शेषं स्फुटम् ।।२।१।१५।।

सूत्रम् अवतार्य व्याकुर्वन्ति **परिहरति न** इत्यादि. **श्रुतिसमवायित्वाद्** इति, श्रुतौ समवायि श्रुतिसमवायि, तस्य भावः तत्त्वं, तस्मात्. तद् व्युत्पादयन्ति **श्रुतौ** इत्यादि. तद्धितान्तं 'महेन्द्र'पदं, **'माहेन्द्र'** इति. तत्र महत्त्वलक्षणो गुणो देवतायां समवेतः प्रतीयते तेन गुणेन युक्तः इन्द्रो वा ग्रहादौ देवतात्वेन प्रतीयते.



स गुणो वा इन्द्रो वा एकैकस्मात् पृथक्कर्तुं न शक्यते.

**''संनियोगशिष्टानाम्'' इति न्यायात्. नहि 'इन्द्र'शब्दः अत्र तद्धितः, तथा सति 'महैन्द्रः' इति स्याद्, असमर्थत्वात् समासः च न भवेद्. अतः शब्दभेदाद् इन्द्रात् महेन्द्रो भिन्नः ।।२।१।१६।।**

**व्यपदेशाच्च ।।२।१।१७।।**

**भेदेन व्यपदेशः च भवति, ''इन्द्रं निगमेषूपलक्षयेद् इन्द्रयाजिनो... महेन्द्रयाजिनः'' (आप.श्रौ.सू.१।२।७) इति. ''ततोऽधिकामं यजेत'' (तै.सं.२।५।४।११) इति च. अयञ्च विकल्पो न उपपद्यतइति भेदः ।।२।१।१७।।**

**हेत्वन्तरम् आह –**

**गुणश्चानर्थकः स्यात् ।।२।१।१८।।**

---

**यदि गुणो भेदको न स्याद् अनर्थकएव स्यात्.**

''संनियोगशिष्टानां सह[वा] प्रवृत्तिः सह वा निवृत्तिः'' इति न्यायात्[१]. संनियोगशिष्टत्वे मानन्तु 'महेन्द्र'पदाद् देवतातद्धितः. नच 'इन्द्र'पदादेव तद्धितः ततो 'महत्'पदेन समासः इति वाच्यं, नहि 'इन्द्र'शब्दात् तद्धितः तथासति 'महैन्द्रः' इति स्यात्. ग्रहादौ महत्त्वस्य अभावेन असमर्थत्वात् ''सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः'' (पाणि.सू.२।१।६१) इत्यनेन विहितः समासश्च न भवेत्. नच समासान्तरम् अत्र सम्भवति ''आन्महतः समानाधिकरणजातीययोः''(पाणि.सू.६।३।४६) इति सूत्रेण समानाधिकरणस्यैव उत्तरपदत्वे महतः आदन्तत्वविधानात्. अतः शब्दभेदाद् इन्द्राद् महेन्द्रो भिन्नः इति अर्थः ।।२।१।१६।।

‘‘**ततो अधिकामं...**’’ इत्यादि. अयम् अर्थः – इतः पूर्वं ‘‘नागतश्रीः महेन्द्रं यजेत’’ (तै.सं.२।५।४।८) इत्यादिना गतश्रीकाणामेव महेन्द्रयागम् उक्त्वा तदतिक्रमेण इन्द्रयागे स्वदेवतातः प्रच्युत्या देवतान्तरस्य

१. ‘‘संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः’’ इति लो.न्या.सा.४४४. ‘‘एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः’’ इति परिभाषा पाठः १७.

**नहि तस्य अन्यत् प्रयोजनम् अस्ति. तस्मादपि भिन्नः ।।२।१।१८।।**

**‘‘अनर्थकः स्याद्’’ इति अनुवर्तते –**

**तथा याज्यापुरोरुचोः ।।२।१।१९।।**

**इन्द्रमहेन्द्रयोः याज्यापुरोनुवाक्ये भिन्नतया निरूपिते ते व्यर्थे भवतः. ‘‘ऐन्द्रसानसिं...प्रससाहिषे’’ (तै.ब्रा.३।५।७।३–४) इति इन्द्रस्य, ‘‘महान् इन्द्रो य ओजसा... महान् इन्द्रो नृवदाचर्षणिप्रा’’ (तै.ब्रा.३।५।७।४)इति अनुमन्त्रणभेदः च ज्ञातव्यः. तस्मादपि भिन्नः ।।२।१।१९।।**

**ननु उक्तं वशावद् भविष्यति इति तत्र उत्तरम् उच्यते –**

**वशायामर्थसमवायात् ।।२।१।२०।।**

---

**अजावशा ‘छाग’शब्देन उच्यते. निगदे जातिवाची शब्दः प्रयोक्तव्यः. तत्र छागत्वं जातिः, वशायां समवेतत्वात् प्रत्यक्षेण**

अप्राप्त्या पापित्वं च उक्त्वा तदनन्तरं प्राप्तश्रीकस्य सर्वदा इन्द्रप्राप्तौ संवत्सरोत्तरं व्रतपतीष्टिं कृत्वा इन्द्रं वा महेन्द्रं यथेच्छं यजेत इति उक्तम्. इन्द्रमहेन्द्रयोः ऐक्ये इदं **न उपपद्यते** इति ।।२।१।१७।।

भाष्यम् अत्र स्फुटार्थम् ।।२।१।१८।।



अत्र ‘**पुरोरुक्**’[१] पदेन पुरोनुवाक्या उच्यते – ‘‘पुरः=पूर्वम् उच्यते’’ इति ‘पुरोरुक्’. साहि याज्यातः पूर्वम् उच्यते, ‘‘पुरोनुवाक्याम् अनूच्य याज्यया जुहोति’’( ) इति श्रुतेः. **अनर्थक** इत्यादि याज्यानुवाक्ययोः ‘इन्द्रः’ इति ‘महेन्द्रः’ इति च यः शब्दभेदः सो अनर्थकः स्याद् इति अर्थः. तद् आहुः इन्द्रःइत्यादि चतुर्भिः युक्तयो भेदे उक्ताः ।।२।१।१९।।

सूत्रम् अवतारयन्ति **ननु** इत्यादि. **नापि** इत्यादि, व्यक्तिसद्भावेपि

---

१. मुद्रितः पाठः ‘पुरोऋक्’ इति.

**दृश्यतइति निगदो युक्तः. तथा इन्द्र–महेन्द्रौ न प्रत्यक्षसिद्धौ. नापि इन्द्रत्वं जातिः. तस्मात् तत्र जातिरूपस्य अर्थस्य समवायाद् विषमो दृष्टान्तः इति अर्थः ।।२।१।२०।।**

**यत्रेति वार्थवत्त्वात् स्यात् ।।२।१।२१।।**

**‘वा’शब्दः पक्षं व्यावर्तयति. संस्कारकर्मणी–एव स्तुतशस्त्रे. अर्थवशाद् अपकर्षो न अस्माकं बाधकः. यत्र लिङ्गेन विनियोगः स्यात्, श्रुत्या वा साधारण्येन, यत्र नीयमानानाम् अर्थवत्ता तत्र नयनं स्यात्, न तावता संस्कारपक्षः त्यज्यते. ‘‘अपकृष्यताम्!...’’ इति प्रोचनामात्रम्! इतिशब्दो मनसि स्थितं वाक्यार्थं परामृशति. यत्र अपकृष्यमाणानाम् अर्थवत्ता भवति तत्र इति. अर्थवत्त्वाद् हेतोः अपकर्षः स्याद् इति अर्थः ।।२।१।२१।।**

**न चाम्नातेषु[१] ।।२।१।२२।।**

---

**यत्र पुनः स्तोत्रशस्त्राणि अर्थम् अविचार्यैव आम्नायन्ते यथा**

तदपगमादिना तन्न जातिः इति अर्थः. नच देवताविग्रहवादे व्यक्त्यैक्यात् तयोः ऐक्यं शङ्क्यं, तदापि ब्रह्मावेशानावेशाभ्यां भेदसिद्धेः इति. तथाच दृष्टान्तवैषम्याद्

असङ्गतः पूर्वपक्षः इति भावः ।।२।१।२०।।

एवम् इन्द्र–महेन्द्रयोः भेदे साधिते वशादृष्टान्ते पुनः प्रकारान्तरेण शङ्कते. तद् व्याकुर्वन्ति वा इत्यादि. ननु उक्तं ''संस्कारकर्मत्वे स्तुतशस्त्रयोः अन्यत्र अपकर्षो न स्याद्'' इति, तत्र आह **अर्थवशात्** महेन्द्रग्रहयाजिसंनिधौ स्तुतशस्त्रे चोदिते– इति तदर्थवशात् तत्र तयोः अपकर्षो न संस्कारकर्मत्वबाधकः. तद् उपपादयति यत्र इत्यादि. तथाच अत्र श्रुतिसाधारण्याद् नयनेपि नीयमानस्य इन्द्रस्य परमैश्वर्यरूपो अर्थो न त्यज्यतइति अदोषात् नयनं स्यात्. शेषं

---

१. ''न त्वाम्नातेषु'' इति प्रसिद्धः पाठः.

**''याम्याः शंसन्ति''(    ) ''सर्पराज्ञिया ऋग्भिः स्तुवन्ति'' (तै.सं.७।३।१।२) इति ''मनोग्रहे शिपिविष्टवतीं स्तुवन्ति'' (    )इति प्रायश्चित्ते; तथा मूषिकासूक्तादीन्यपि तत्र–तत्र विनियुज्यन्ते, तस्माद् अर्थम् अविचार्य यत्र विनियोगः तत्र अपकर्षाभावात् संस्कारत्वे सिद्धे तत्सामान्याद् अन्यत्रापि भविष्यति इति अर्थः ।।२।१।२२।।**

**नच वक्तव्यं – तेषाम् अर्थएव नास्ति, विद्यमानो वा यज्ञे न उपयुज्यते, तान्येव अर्थम् अविचार्य विधीयन्ते इति वाच्यम्, अर्थवतामेव विधानाद् इति तत्र !आह –**

**दृश्यते ।।२।१।२३।।**

**सर्वेषाम् अर्थवत्ता अस्ति. मूषकाक्षमण्डूकादयः तत्तत्सूक्ते वाच्याः. तत्र अग्नौ मण्डूकोपयोगः, राजसूये अक्षाणाम्, उपशये मूषकस्य. तत्तत्सूक्तानां तत्तद्यागे उपयोगः स्पष्टः. सर्वेषाञ्च वाचःस्तोमे विनियोगः उच्यते, ''सर्वा ऋचः समाः सर्वाणि यजूंषि सर्वाणि सामानि वाचःस्तोमे पारिप्लवं शंसति'' (    )इति. तथा ''यस्याश्विने शस्यमाने**

---

स्फुटम्. एवं तात्पर्यम् उपपाद्य सौत्राणां पदानाम् अर्थम् आहुः इतिशब्दः



इत्यादि ।।२।१।२१।।

**यथा** इत्यादि. ''**सर्पराज्ञिया ऋग्भिः**'' (तै.संहि.१।५।४।१)इति ''भूमिर्भूम्ना''(तै.संहि.१।५।४।१) इत्याद्या ऋचो भूमिसम्बन्धिन्यः 'सर्पराज्ञिया' इति उच्यन्ते. 'सर्पराज्ञिया' इत्यत्र भिसो लुक् छान्दसः. ''**मनोग्रह...**'' इति द्वादशाहस्य यागस्य दशमे अहनि मनोग्रहो विहितः तत्र. तेन सिद्धम् आहुः **तस्माद्** इत्यादि. **संस्कारत्वे सिद्धे** इति तत्परत्वेन संस्कारत्वे सिद्धे ।।२।१।२२।।

**अग्रिमसूत्रम् अवतारयन्ति नच इत्यादि. भाष्यं प्रकटार्थम् ।।२।१।२३।।**

**सूर्यो नाविर्भवति... सवा अपि दाशतयीरनुब्रूयाद्'' (आप.श्रौ.सू.१४।२४।१–२) इति तस्माद् उत्कर्षेपि अन्यत्र अर्थवत्ता वर्ततइति उत्कर्षभयात् न प्रधानकर्मणी वक्तव्ये. अतः सर्वत्र उत्कर्षाभावात् क्वचिद् उत्कर्षो न दोषः ।।२।१।२३।।**

**अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसतीति[१]**
**क्रियोत्पत्तिं विदध्याताम् ।।२।१।२४।।**

**अपि वा प्रधानकर्मणी स्तोत्रशस्त्रे स्याताम्. तत्र हेतुः श्रुतिसंयोगात्, श्रुतिषु वेदभागेषु संयोगो वर्तते, ''कवतीषु स्तुवते'' (  ) ''शिपिविष्टवतीषु स्तुवते'' (    ) इति. नहि 'शिपिविष्ट' शब्दः 'कवती' शब्दो वा स्तुतौ उपयुज्यते. अतः स्वप्रकरणे ''...स्तौति''–''...शंसति'' इति वाक्ये प्रधानक्रियोत्पत्तिमेव विदध्याताम्. संस्कारकर्मत्वेन अनयोः प्रकरणित्वं, प्रधानत्वे तादृशमेव कर्म फलायेति सर्वं सुस्थम् ।।२।१।२४।।**

**हेत्वन्तरम् आह –**

**शब्दपृथक्त्वाच्च ।।२।१।२५।।**

**शब्देनैव स्तोत्राणां पृथक्त्वं भेदो अवगम्यते. द्वादशाग्निष्टोमे**

---

**''पञ्चदशोक्थ्यः'' (      ) इत्यादिस्तुतिस्तु एका अनन्ता वा ? उभयथा द्वादशादिसङ्ख्या व्याहन्येत उक्थ्यएव सवनत्रयेपि आवर्ततइति देवताकृतोपि न सङ्ख्यानियमः. अतः सङ्ख्यासार्थकत्वाय**

---

इतः आरभ्य षट्सूत्राणि सिद्धान्तसाधकानीति व्याकुर्वन्ति अपि वा इत्यादि. **संयोग...** इति अनुपयुक्तार्थकशब्दसंयोगः. **वाक्ये** इति प्रथमाद्विवचनं, न इति संस्कार्यायाः देवतायाएव प्राधान्येन तस्याएव प्रकरणित्वात् न

१. ''स्तौतिशंसती'' इति प्रसिद्धः पाठः.

**प्रधानकर्मणी–एव इति अङ्गीकर्तव्यम् ।।२।१।२५।।**

**अनर्थकञ्च तद्वचनम् ।।२।१।२६।।**

**अग्निष्टुति श्रूयते ''आग्नेयाः ग्रहाः भवन्ति'' (      ) इति. तत्र पुनः उच्यते ''आग्नेयीषु स्तुवते'' (    ) '' आग्नेयीषु शंसन्ति'' (    ) इति. इदं वचनम् अनर्थकं स्यात्, प्रकृतिन्यायेन सर्वप्राप्तौ इतरनिषेधार्थम् इदं वचनम्. देवताशेषत्वेतु इतरत्र प्राप्नोति, 'अग्निष्टुत्' पदेनैव देवतान्तरनिषेधात्, तथा इन्द्रस्तुतिः. तस्मात् तत्सार्थकत्वाय प्रधानकर्मणी–एव ।।२।१।२६।।**

**अन्यश्चार्थः प्रतीयते ।।२।१।२७।।**

**यदि स्तुतिरेव प्रतीयते तदा स्तोत्रशस्त्रयोः भेदो न स्यात्. अन्यच्च स्तोत्रम् अन्यच्च शस्त्रम् इति शब्दभेदात् स्वरूपभेदात् च अवगम्यते. तस्मात् स्तोत्रात् शस्त्रम् अन्यत्. अर्थश्च अन्यः उभयोः, बहिष्पवमानस्य पवित्रार्थत्वम्. ऐन्द्राग्नस्य तद्ग्रहोपयोगः कालविप्रकर्षः**

---

**तादृशम्** इति अनुपयुक्तशब्दकर्कर्ससम्पादितम् ।।२।१।२४।।

सूत्रान्तराणि अवतारयति **हेत्वन्तरम् आह** इति. कः शब्दः संस्कारात्



स्तुतिशस्त्रयोः भेदकः ? इत्यतः आहुः द्वादश इत्यादि, स्तोत्राणि इति शेषः. स्तुत्या देवता कथञ्चन संस्कार्या, तत्र संस्कारसङ्ख्या निष्प्रयोजना अतः तथा इति अर्थः. आवर्तते इति पञ्चदशसङ्ख्या आवर्तते. शेषं स्फुटम् ।।२।१।२५।।

**तथा इन्द्रस्तुतिः** इति यथा अत्र 'अग्निष्टुत्' पदेन प्रधानभूतदेवतायाः प्राप्त्या देवतान्तरनिषेधाद् आग्नेयीवचनवैयर्थ्यं तथा 'महेन्द्र' पदेनैव देवतान्तरनिषेधाद् ऐन्द्री स्तुतिरपि व्यर्था इति अर्थः ।।२।१।२६।।

**च. तस्मादपि प्रधानकर्मणी ।।२।१।२७।।**

**अभिधानञ्च कर्मवत् ।।२।१।२८।।**

**प्रधानकर्मवदेव अभिधानं भवति. यथा ''ग्रहं गृह्णाति'' (श.प.मा.ब्रा.४।६।५।५) तथैव ''प्रउगं शंसति'' (शाङ्खा.ब्रा.१४।४) ''निष्कैवल्यं शंसति'' (द्र.:आप.श्रौ.सू.१४।१९।१०) इति द्वितीयाश्रुतिः अत्र प्रधानत्वम् आह. तस्मादपि प्रधानकर्म ।।२।१।२८।।**

**फलनिवृत्तिश्च[१] ।।२।१।२९।।**

**फलेन निवृत्तिः समाप्तिश्च श्रूयते. इदं प्रधानस्यैव भवति. ''स्तुतस्य स्तुतमसि शस्त्रस्य शस्त्रमसि'' (तै.सं.३।२।७।१– २)इति अनुमन्त्रणमन्त्रौ श्रूयेते. तत्र अर्थवादो ''यज्ञो वा वै यज्ञपतिं दुह'' (तै.सं.३।२।७।२–३) इत्यारभ्य सोमयागस्य सार्थकत्वाय स्तुतशस्त्रयोः दोहत्वेन इमौ मन्त्रौ निरूपतौ. अतः प्रधानोपकारकत्वात् प्रधानकर्मणी–एव इति सिद्धम् ।।२।१।२९।।**

**।।इति चतुर्थं स्तोत्रादिप्राधान्याधिकरणम् ।।४।।**

**(पञ्चमाधिकरणम्)**

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ।।२।१।३०।।**

**इदं समाम्नायते – ''न ता नशन्ति न दभाति तस्करो नैना अमित्रो व्यथिरादधर्षति देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः**

---

एतत्सूत्रत्रयभाष्यम् प्रकटार्थम् ।।२९।।

।।इति चतुर्थं स्तोत्रादिप्राधान्याधिकरणम् ।।

प्रासर्ङिकम् इदम् अधिकरणम्. अत्र विषयवाक्यम् उदाहृत्य व्याकुर्वन्ति

---

१. 'निर्वृत्तिश्च' इति प्रसिद्धः पाठः.

**सचते गोपतिः सह'' (तै.ब्रा.२।४।६।९) इति, यस्तु गाः ददाति अनुब्रध्यादिषु च यजते तस्य गावः व्यर्थं न नश्यन्ति तस्करोपि स्वार्थं न स्थापयति न गृह्णाति इति अर्थः. स श्रुतिरूपापि व्यथा तासां धर्षणं न करोति किन्तु स गोपतिः ताभिः सह सचते सञ्चितः पुष्टो भवति ज्योतिष्मान् सूर्य इव. सहि किरणान् सर्वेभ्यो ददाति मधुधारारूपांश्च देवान् पाययति अतो यजते. अतः सर्वदा अक्षीणः प्रकाशते. अत्र 'यजते' – 'ददाति' इति उदाहरणम्. अत्र सन्देहः – यथा ''द्वादशशतं ददाति'' (      ) ''अनुब्रध्यामालभेत'' (आप.श्रौ.सू.१८।२०।४) इति विधायकं तथा अत्रत्येपि 'यजते' – 'ददाति' इति विधायके उत न ? इति. किं तावत् प्राप्तम् ? विधायके ! इति. तद् आह विधिमन्त्रयोः ऐकार्थ्यं प्रवर्तकत्वं, तत्र हेतुः ऐकशब्द्यात् एकएव शब्दः उभयत्र, नहि सएव एकत्र प्रवर्तको अपरत्र न इति वक्तुं शक्यते. तस्माद् उभयत्र विधायकौ ।।२।१।३०।।**

**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ।।२।१।३१।।**

**अपि वा इति पक्षं व्यावर्तयति. मन्त्रो अभिधानवाची केवलं धर्मप्रमितिमेव जनयति न विधायकः. तत्र हेतुः प्रयोगसामर्थ्यात्. मन्त्रस्तु प्रयोगे समर्थः. प्रयोगः प्रवृत्तस्य व्यापारनिचयः. विधिस्तु प्रवर्तकः पूर्वसिद्धः, तेनैव प्रवृत्तत्वात्. कृतिसमये प्रवर्तकत्वं व्यर्थं किन्तु प्रमितिमेव जनयति**



''**विद्यया कुर्याद्**''

कर्मफलस्य प्रत्यक्षत्वबोधनाय **यस्तु** इत्यादि. दृष्टान्ते 'गो'शब्दवाच्याः किरणाः. अतो यजते इति देवानां पानसम्पादनेन यजते. एतस्य पूर्वपक्षसूत्रत्वज्ञापनाय आहुः **विधायके** इति. **ऐकार्थ्यम्** एकप्रयोजकनकत्वम्. तथाच 'ददाति'–'यजते' इति धात्वाख्याताद्यावृत्त्या अभ्यासात् कर्मभेदो अङ्गीकार्यः इति पूर्वपक्षाशयः ।।२।१।३०।।

**अभिधानवाची** इति, ''अभिधीयते अनेन इति 'अभिधानं''' धर्मवाचकं

**इति. तस्मात् मन्त्रो न विधायकः ।।२।१।३१।।**

**।।इति पञ्चमं मन्त्राविधायकत्वाधिकरणम् ।।५।।**

**(षष्ठाधिकरणम्)**

**ननु मन्त्रब्राह्मणयोः विभागएव न ज्ञायते, वेदत्वस्य तुल्यत्वाद्. अतः पूर्वाधिकरणविचारो न युक्तः – इति आशङ्क्य मन्त्रस्य लक्षणम् आह –**

**तच्चोदकेषु मन्त्राख्या ।।२।१।३२।।**

**तच्चोदकाः मन्त्राः यस्य उच्चारणरूपे अधिष्ठाने सएव विधिरेव प्रेरको यस्य. यद्यपि अध्ययनविधिना सर्वमेव प्रेरितं तथा प्रायश्चित्तादौ, तथापि कर्मविधिना अनुष्ठानं बोध्यते. विधिमन्त्रस्तु साधनत्वेन बोध्यतइति अग्रेपि कर्मणि तदनुवादकत्वात् तच्चोदकत्वमेव. अतः कर्मणि याग–जपादौ यः साधनभूतः शब्दः स मन्त्रः. ''कर्मकरणः शब्दो 'मन्त्रः''' इति उक्तं भवति ।।२।१।३२।।**

**।।इति षष्ठं मन्त्रनिर्वचनाधिकरणम् ।।६।।**

---

पदम्. तद्वाची तदभिधायकः इति अर्थः ।।२।१।३१।।

।।इति पञ्चमं मन्त्राविधायकाधिकरणम् ।।

पूर्वपक्षमुखेनैव सन्देहमपि सूचयन्तः सूत्रम् अवतारयन्ति **ननु** इत्यादि. व्याकुर्वन्ति **यस्य** इत्यादि. अत्र अतिव्याप्तिम् आशङ्क्य परिहरति **यद्यपि** इत्यादि, यद्यपि अध्ययनविधिना सर्वमेव उच्चारणं प्रेरितं तथा प्रायश्चित्तादावपि सर्ववेदाध्ययनं विहितम् अतो ''विधिबोधितोच्चारणकः शब्दो 'मन्त्रः''' इति लक्षणं ब्राह्मणभागे अतिव्याप्नोति, तथापि कर्मविधिना विविधम् अनुष्ठानं यत्र बोध्यते तत्र मन्त्रः साधनत्वेन बोध्यते – ''अनेन इदं कुर्याद्'' इति. अतो अग्रेपि कर्मणि उच्चारणविधेः अध्ययनानुवादकत्वात् तद्बोधनं

**(सप्तमाधिकरणम्)**

**मन्त्रलक्षणं निरूप्य ब्राह्मणलक्षणम् आह –**

**शेषे ब्राह्मणशब्दः ।।२।१।३३।।**

**मन्त्रातिरिक्तो ब्राह्मणम् इति. अनेन वेदे भागद्वयम् इति उक्तम्. अर्थवादानामपि ब्राह्मणत्वमेव ।।२।१।३३।।**

**।।इति सप्तमं ब्राह्मणनिर्वचनाधिकरणम्।।७।।**

**(अष्टमाधिकरणम्)**

**प्रवरोहनामधेयानां मन्त्रत्वम् अस्ति उत न ? इति विचारः. किं तावत् प्राप्तम् ? तच्चोदकसद्भावाद् मन्त्रत्वम् इति प्राप्ते अभिधीयते –**

---

चोदकम् अतिदेशकमेव इति अर्थः. तेन सिद्धम् आहुः अतः इत्यादि. नच प्रत्यगाशीर्मन्त्रादिषु अव्याप्तिः, विषयत्वेन रूपेण तेषामपि जपसाधनत्वाद् इति. [1] *नच ''प्रत्यगाशिषो मन्त्रान् जपत्यकरणान्'' (आप.श्रौ.सू.४।१।३) इति कल्पसूत्रविरोधः, तत्र 'अकरणान्' इत्यनेन करणत्वाभावस्यैव उक्ततया साधनत्वस्य अवारणात्. ज्ञाने इव जपेपि विषयस्य कर्मत्वकरणत्वयोः अविरुद्धत्वादिति सिद्धम् आहुः* **कर्मकरणः** इति, कर्मणः करणं येन स इति अर्थः. [2] * **एवम्**



**उत्तरकाण्डस्थेष्वपि मन्त्रेषु उपासनसाधनत्वमिति,*** न कोपि दोषः ।।२।१।३२।।

।।इति षष्ठं मन्त्रनिर्वचनाधिकरणम्।।

भाष्यम् अत्र अतिरोहितार्थम् ।।२।१।३३।।।

।।इति सप्तमं ब्राह्मणनिर्वचनाधिकरणम्।।७।।

---

१. ''*...* चिह्नद्वयान्तरितविभागः पाश्चात्यः'' इति आद्यसम्पादकः.

२. इतः आरभ्य *...* स्थाने सुरत्यादर्शे ''तेन...'' इति आद्यसम्पादकः.

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ।।२।१।३४।।**

**अनाम्नाताः एते अमन्त्राः, आम्नातत्वे सति तच्चोदकेषु मन्त्राख्या, तथात्वे सत्येव शेषे 'ब्राह्मण'शब्दः. तद् आह –आम्नातेषु विभागो द्विविधः, अन्यथा लौकिकवाक्यानां सङ्कल्पस्य च तथात्वं स्यात्. तस्मात् प्रवरादीनां न मन्त्रत्वं तथा न ब्राह्मणत्वम्. केचन अर्थप्रसिद्ध्या मन्त्रत्वम् आहुः, तत् प्रकरणभेदेन स्थितयोः ऋक्सामयोरेव सम्भवति नतु कृशररूपयजुःशाखान्तरेपि. वाजसनेयिके ब्राह्मणे ''वसन्ताय कपिञ्जलानालभेत'' (वा.मा.सं.२४।२०) इति न मन्त्रौ, अमन्त्रयोरपि तत्र प्रक्षेपः त्रिपथपाठाय यजुष्ट्वार्थं ''मन्त्रब्राह्मणयोः वेदः त्रिगुणं यत्र पठ्यते'' (शौ.च.व्यू.परि.२) इति. तस्मात् सूत्रोक्तमेव लक्षणं युक्तम् ।।२।१।३४।।**

**।।इत्यष्टमं प्रवरोहाद्यमन्त्रताधिकरणम्।।८।।**

---

**लौकिकवाक्यानाम्** इति, ''पत्नि कति ते जाराः'' (आप.श्रौ.सू.८।९।२०)इत्यादिप्रश्नोत्तरवाक्यप्रभृतीनाम्. भाट्टादीनां मतम् अनुवदन्ति केचन इत्यादि. तत्र अस्वरसं बोधयन्ति **तद्** इत्यादि. कृसरपाठे कुतो न सम्भवति ? इत्यतः आहुः **वाजसनेयिके** इत्यादिना. **मन्त्रौ** इति. इदं एतदग्रिमं च ''ग्रीष्माय कलविङ्कान्'' (वा.मा.सं.२४।२०) इति न मन्त्रौ. ननु मन्त्रमध्ये पठितयोः कुतो

न मन्त्रत्वम् अतः आहुः अमन्त्र... इत्यादि. यजुष्ट्वार्थम् इति **यजुर्वेदत्वार्थम्.** तद्बोधनाय यजुर्वेदलक्षणम् आहुः **मन्त्र...** इत्यादि. इदञ्च चरणव्यूहे सिद्धम्. ''त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः'' (शौ.च.व्यू.परि.२) इति तत्र वाक्यात्. [१] * त्रिपथपाठ... इति, पदक्रमजटात्मकानां त्रयाणां समाहारः **'त्रिपथम्',** तेन प्रकारेण पाठः **'त्रिपथपाठः'** तदर्थम्. ब्राह्मणभागेहि न पदादिपाठः किन्तु संहितायामेव. तत्रच माध्यन्दिनानां चतुर्विंशे अध्याये

---

१. ''*...* चिह्नान्तरितो भागः पाश्चात्यः'' इति आद्यसम्पादकः.

**(नवमाधिकरणम्)**

**''ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्'' (तै.ब्रा.१।२।१।२६) इति मन्त्रे मन्त्राणां त्रैविध्यम् उक्तम्. तत्र लक्षणाभावे भेदकाभावात् त्रैविध्यं न उपपद्येतेति क्रमेण लक्षयति –**

**तेषामृग् यत्रार्थवशेन पादव्यवस्था।।२।१।३५।।**

**तेषां त्रिविधानां मन्त्राणां मध्ये ऋग् एषा यत्र अर्थवशेन पादव्यवस्था, अर्थवाचकपदानुरोधेन आदिपादादिव्यवस्था. नतु छन्दोनुरोधेन मगणादिकृता पादव्यवस्था. अनुवादएव अयं, लौकिकानां वेदत्वाभावाद् वाक्यभेदप्रसङ्गात् च. तस्माद् ''अर्थनिरूपकपदानुरोधेन पादव्यवस्था सा 'ऋक्''।।२।१।३५।।**

**।।इति नवममृग्लक्षणाधिकरणम्।।**

---

''वसन्ताय कपिञ्जलान्'' (वा.मा.सं.२४।२०) इत्यादीनि बहूनि वाक्यानि, तानि चेद् ब्राह्मणे पठ्येरन् तदा तेषां पदादिपाठो न स्यात्. अतो मन्त्रभागे संहितायां पठितानि. तावता न मन्त्रत्वं नियन्तुं शक्यते इति अर्थः.* सिद्धम् आहुः **तस्माद्** इत्यादि. ''वसन्ताय...'' इत्यादीनां मन्त्रत्वाङ्गीकारे उक्तवाक्यबाधापातात् सूत्रोक्तं



''आम्नातत्वे सति विशेषविधिबोधितोच्चारणकः शब्दो 'मन्त्रः''' इति लक्षणं युक्तम्. किञ्च एतदतिरिक्तस्थले कुत्रापि विधायकत्वं न मन्त्रे दृष्टम्. अत्रच मन्त्रत्वं सन्दिग्धं ब्राह्मणेतु विधायकत्वं प्रसिद्धम् इति लिङ्गभूतं लिङ्गं स्थानाद् बलिष्ठम् अतः तथा इति अर्थः।।२।१।३४।।

।।इति अष्टमं प्रवरोहाद्यमन्त्रताधिकरणम्।।

सूत्रे **तेषाम्** इत्यस्य आम्नातानां मन्त्राणाम् इति अर्थः. ननु एवंसति छन्दसो वैयर्थ्याद् अङ्गत्वहानिप्रसङ्गः इत्यतः आहुः **अनुवादः** इत्यादि, अयं जैमिन्युक्तपादव्यवस्थाकथनात्मकः छन्दःशास्त्रानुवादएव. तत्र मगणादिकृत

**(दशमाधिकरणम्)**

**'ऋग्' इति अनुवर्तते –**

**गीतिषु सामाख्या।।२।१।३६।।**

**''ऋक्षु यद् गानं तत् 'साम''. 'सा'=ऋक् तस्याः + 'आम' वर्णाकारेण अनभिव्यक्तः शब्दः, स लोके 'गीतिङ्गपदाभिधेयो भवतीति गीतिषु सामाख्या इति उक्तम्. ननु अस्य वेदत्वे को हेतुः ? 'धर्मप्रतिपादनम्' इति ब्रूमः ! ननु सङ्केताभावात् कथं प्रतिपादकत्वम् ? आधारचैव सो अर्थः प्रतिपाद्यतइति. प्रयोजनाभावश्च न, ''ऋक्षु यः आमभागः समायाति सो अनभिव्यक्तरसज्ञापनार्थः कथम् अस्य मूलभूतो रसः !''इति भवति जिज्ञासा. अनेन मूलपुरुषो यज्ञोपि ज्ञातो भवति, यस्य अंशाः यज्ञाः. अतएव ''सामानि यो वेद स वेद सर्वम्'' (इतिहा.उप.९) इति. अपौनरुक्त्यन्तु तत्तदाश्रयगर्थमूलबोधकत्वेन. तस्मात् सुष्ठूक्तं गीतिषु सामाख्या इति।।२।१।३६।।**

**।।इति दशमं सामलक्षणाधिकरणम्।।**

---

पादव्यवस्थानां लौकिकानां छन्दसां वेदत्वाभावात्. तत्रत्ये ''अथ लौकिकम्'' (   ) इति सूत्रे तेषां प्रासङ्गिककथनं प्रतिज्ञाय मगणादिभिः तद्व्यवस्थादर्शनात्, ततः पूर्वं कथितेषु तान् विनैव अक्षरैः व्यवस्थादर्शनात् च. तत्र गायत्र्यादीनां नानाविधत्वस्य नानाविधपादकत्वस्य च कथनेन ''का इयं गायत्री ?''

इत्यादिनिर्णयस्य अर्थबलादेव सिद्धेः इति ततएव अवगम्यते. यदि पुनः तादृशामपि छन्दसां वेदत्वम् उच्यते तदा वाक्यभेदः. लौकिकेषु तेषु छन्दस्त्व–वैदिकत्वयोः विधानाद् इति भावः ।।२।१।३५।।

।।इति नवममृग्लक्षणाधिकरणम्।।

छान्दोग्ये उद्गीथोपासनायां–'''सा' च 'अम' च''(छा.उ.१।६–७)इति विगृह्य समस्तं 'साम'पदं बहुधा व्याख्यातमिति प्रकृतेपि 'अम'पदेन सह समस्य व्याख्यायते सा इत्यादि. **सङ्केताभावाद्** इति 'अम'

**(एकादशाधिकरणम्)**

**शेषे यजुःशब्दः ।।२।१।३७।।**

**ऋक्सामातिरिक्तो मन्त्रो यजुः. ननु ''प्रकटार्थपादरहितो मन्त्रो यजुः'' इति कुतो न उक्तम् अनुवृत्तेः लघुत्वात्? सत्यं, मन्त्रमात्रेपि 'यजुः'प्रयोगो अस्ति–''एतद्वै यजुस्त्रयीं विद्यां प्रति'' (सहवै.१५) इति; तथा ''अतिच्छन्दसर्चा मिमीते पञ्चकृत्वो यजुषा मिमीते'' (तै.सं.६।१।९।५) इति. अतो विशेषविवक्षाभावेपि यथा 'यजुः'पदप्रयोगो भवति तदर्थं शेषे 'यजुः'शब्दः इति. ''मन्त्राणां भेदत्रयमेव'' इतिच ज्ञापयति. तेन अक्षरविधानेपि 'यजुषा'इति यथा भवति ''पञ्चभिः आहवनीयम्'' (तै.ब्रा.१।१।५।२) इति. तस्मात् सुष्ठूक्तं ''शेषे 'यजुः'शब्दः'' इति।।२।१।३७।।**

**।।इत्येकादशं यजुर्लक्षणाधिकरणम्।।**

---

शब्दे सङ्केताभावात्. ज्ञापनप्रयोजनम् आहुः कथम् इत्यादि. साम्नो रसवत्त्वं च गान्धर्ववेदमूलत्वाद् अवगन्तव्यम्. ऋक्सामभ्याम् एकार्थबोधने पौनरुक्त्यम् आशङ्क्य परिहरन्ति **अपौनरुक्त्यम्** इत्यादि।।२।१।३६।।

।।इति दशमं सामलक्षणाधिकरणम्।।



अनुवृत्तेः लघुत्वाद् इति, 'शेष'पदेन ऋक्सामभेदे बोधनीये तयोः अनुवृत्तौ तदुभयलक्षणानुसन्धानाधीनम् एतज्ज्ञानमिति प्रतिपत्तिगौरवम्. स्वतन्त्रलक्षणेतु तदभावाद् लघुत्वं तस्मात् प्रयोगोदाहरणम् आहुः एतद् इत्यादि. इदंहि स्वाध्यायब्राह्मणे '''ओम्' इति प्रतिपद्यते'' ( )इति प्रणवेन उपक्रमं विधाय तत्प्रशंसार्थम् उक्तम्. अयं यर्जुमन्त्रस्त्रयीविद्याप्रतिनिधिरूपइति तदर्थः. द्वितीयन्तु संहितायां षष्ठाष्टके तत्रहि ''अभि त्यं देव सवितारमिति अतिच्छन्दसर्चा मिमीते'' (तै.सं.६।१।९।४) इति उक्त्वा पुनः ''पञ्चकृत्वो यजुषा मिमीते'' (तै.सं.६।१।९।५) इति तेनैव मन्त्रेण उन्मानसङ्ख्यां विधत्ते इत्यतः तस्याम् अर्थवशेन पादव्यवस्थया

**(द्वादशाधिकरणम्)**

**''त्रिविधाएव मन्त्राः'' इति उक्तं, ''निगदानां त्रिषु अन्तर्भावाभावात् चतुर्थोपि भेदो अस्तु!'' इति आह –**

**निगदो वा चतुर्थं स्याद्धर्मविशेषात्।।२।१।३८।।**

**निगदो वा चतुर्थं स्याद्, वाशब्दः पूर्वनियमनिराकर**

---

ऋग्लक्षणसद्भावेपि पादविशेषविवक्षाभावाद् 'यजुः'पदप्रयोगः. यथाच एकाक्षरे प्रणवे पादादिसम्भावनाशून्येपि 'यजुः'पदप्रयोगः इत्येवं ज्ञापनायैवम् उक्तम्. किञ्च अयं 'शेष'शब्दप्रयोगो ''यजुर्मन्त्राणां भेदत्रयम्'' इति ज्ञापयति, विशेषविवक्षाभावे अन्यत्रापि यजुष्ट्वस्य सुघटत्वादिति. तेन अक्षरात्मकमन्त्रविधानेपि 'यजुषा'इति प्रयोगो यथा भवति ''पञ्चभिः आवहनीयम्'' (तै.ब्रा.१।१।५।२) इति आधानब्राह्मणे ''त्रिभिः अक्षरैः गार्हपत्यम् आदधाति'' (तै.ब्रा.१।१।५।३) इत्यनेन ''भूभुर्वः सुवः'' इति व्याहृतित्रयविनियोगम् उक्त्वा ''पञ्चभिः आहवनीयम्'' इत्यनेन ''भूभुर्वः सुवः'' इति पञ्चानाम् अक्षराणां विनियोगः उक्तः. 'यजुः'शब्दश्च ''इज्यते अनेन'' इति व्युत्पत्त्या सिद्धः. अतो अक्षराणामपि यजुष्ट्वं यथा भवति तदर्थम् एवम् उक्तम् इति अर्थः. ''अभि त्यम्'' (तै.सं.१।२।६।२) इति मन्त्रस्तु प्रथमाष्टकद्वितीयप्रपाठके ''अंशुना ते अंशुः पृच्यताम्'' (तै.सं.१।२।६।१) इत्यस्मिन् षष्ठे अनुवाके द्रष्टव्यः. एवञ्च ''देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः

सूर्यस्य रश्मिभिः'' (तै.सं.१।१।५।१) इत्यस्य मन्त्रस्य यजुर्मध्ये पाठेपि एतद्ब्राह्मणेपि ''सावित्र्या ऋचा'' (      ) इति विशेषनिर्देशात् गायत्रीलक्षणस्य तत्र सत्त्वात् च ऋक्त्वमपि निर्बाधम्. एवम् अन्यत्रापि द्रष्टव्यम्।।२।१।३७।।

।।इत्येकादशं यजुर्लक्षणाधिकरणम्।।

पूर्वोक्ताक्षेपेण इदम् आरभ्यते इति आशयेन आहुः त्रिविधाः इत्यादि, परप्रत्यायनार्थाः मन्त्राः निगदाः – ''प्रोक्षणीरासादय'' (आप.श्रौ.सू.२।३।११)

**णार्थः. चतुर्थं रूपम् इति. तत्र हेतुः धर्मविशेषात्, ''उच्चैः ऋक्सामभ्यां क्रियते, उपांशु यजुर्वेदेन उच्चैः निगदेन'' (      ) इति पादव्यवस्था गीत्युपांशुधर्मेभ्यो अतिरिक्तो निगदधर्मइति धर्मिभेदको भवति. निविदान्तु अनाम्नातत्वात् न शङ्का. तस्मात् चतुर्थो निगदः।।२।१।३८।।**

**व्यपदेशाच्च।।२।१।३९।।**

**'निगदः' इति भिन्नो व्यपदेशः, नापि 'यजुः' पर्यायः, यजुर्मात्रे 'निगदङ्गप्रयोगाभावात्. विशेषवाचकत्वे प्रमाणाभावः. शेषत्वम् अप्रयोजकम् इति अभिप्रायः. तस्मादपि निगदो भिन्नः।।२।१।३९।।**

**यजूंषि वा तद्रूपत्वात्।।२।१।४०।।**

**निगदाः यजूंष्येव. तत्र हेतुः, तद्रूपत्वात् शेषरूपत्वात्. नहि अतिरिक्तत्वं धर्मो भिनत्ति. तस्माद् यजूंष्येव।।२।१।४०।।**

---

''इध्माबर्हिरुपसादय'' (आप.श्रौ.सू.२।३।११) ''इन्द्र आगच्छ हरिव आगच्छ'' (तै.आ.१।१२।३) इत्यादयः, ''ते किं यजुर्भ्यो अन्ये किंवा यजूंष्येव ?'' इति सन्देहे पूर्वपक्षम् आह इति अर्थः. **अतिरिक्तः** इति विरुद्धः. ननु निविदो निगदादपि विलक्षणा ''यन्निविद्भिः न्यवेदयन् तन्निविदां निवित्त्वम्'' (      ) इति निर्वचनविनियोगयोः भेदाद्. अतः ताः कुतो न विचारिताः ? इत्यतः आहुः **निविदाम्** इत्यादि. तथाच तासां निर्वचनादिभेदे सत्यपि निगदवद् यजुर्विरुद्धस्य धर्मस्य अनाम्नातत्वेन यजुष्ट्वे शङ्काभावाद् न विचारिताः इति अर्थः।।२।१।३८।।



**भिन्नो व्यपदेशः** इति भिन्ना संज्ञा. **अप्रयोजकम्** इति यजुष्ट्वाप्रयोजकम्. एवं द्वाभ्यां[1] पूर्वपक्षः उक्तः, चतुर्भिः सिद्धान्तम् आहः।।२।१।३९।।

**नहि** इत्यादि, पदव्यवस्थागीत्योः अभावेन सिद्धे शेषत्वाद् यजुष्ट्वे अतिरिक्तधर्मविशेषो न धर्मिणं भिनत्ति इति अर्थः।।२।१।४०।।

---

१. ''अत्र क्वचिद् आदर्शे 'त्रिभिः' इति पाठो अशुद्धः'' इति आद्यसम्पादकः.

**वचनाद्धर्मविशेषः।।२।१।४१।।**

**ननु उक्तं प्रसिद्धयजुर्भ्यां भेदको धर्मविशेषः इति ! स प्रकारान्तरेणापि उपपद्यते इति आह वचनात्. केषाञ्चिद् यजुषां 'निगद'शब्दवाच्यानाम् उच्चैष्ट्वमिति तदतिरिक्तानाम् उपांशुत्वम्, एतावतापि धर्मे सिद्धे भेदकल्पनायां गौरवम्. तस्माद् धर्मविशेषाद् न चतुर्थत्वम्।।२।१।४१।।**

**अर्थाच्च।।२।१।४२।।**

**वचनादपि उच्चैष्ट्वम् अर्थादपि उच्चैष्ट्वम्. नहि आश्रुत–प्रत्याश्रुतादिकम् उपांशुत्वे सार्थकं भवति, परप्रीतिजनकत्वात्. प्रायिकम् एतद्, उपसत्सु तदभावात्. तस्माद् वचनमेव नियामकं, स्वाभाविको वा अयं धर्मः. कर्मतु प्रधानम् अतः तदनुरोधेन ऋचामपि उपांशुत्वमिति सुष्ठूक्तम् अर्थाच्च इति।।२।१।४२।।**

**गुणार्थो व्यपदेशः।।२।१।४३।।**

**'निगद' इति अतिरिक्तो व्यपदेशो गुणार्थो, नितरां गद्यते इति उच्चैष्ट्वगुणार्थः. ननु *त्रिभिः गुणकथनं व्यर्थम्. अतो द्वयं भेदकम् अस्तु, वैयर्थ्येन अपर्यवसानात्, शब्दतो अर्थतो**

---

**एतावता** इत्यादि, उपांशुत्वस्य यजुरंतरे सावकाशतया निगदाख्ययजुःषु वचनस्य

नियामकताकल्पनमात्रेण उच्चैष्ट्वधर्मे सार्थके सति तेन **धर्मिभेदकल्पनायां गौरवम्** इति अर्थः ।।२।१।४१।।

**अर्थाद्** इति प्रयोजनात्. एतदेव स्फुटीकुर्वन्ति **नहि** इत्यादि. पूर्वोक्तहेतोः प्राबल्याय आहुः **प्रायिकम्** इत्यादि, एतद् उच्चैष्ट्वं निगदानां प्रायिकं ''उपांशूपसदाचरन्ति'' (   ) इत्यतः तत्र **तदभावाद्** इति. एवंसति **विधानात् च, गुणः तत्रत्यो नित्यइति यदि, तदा सर्ववैलक्षण्याद् गुणो भेदकएव अस्तु ! इति* चेत्, मा एवं, कर्मणः उपांशुत्वे तदभावाद् अतो गुणकथनएव पर्यवसानां त्रयाणाम्. यत्रापि ऋक्सामयोः उपांशुत्वं तत्रापि निगदः उच्चैः इति. तस्माद् गुणार्थएव व्यपदेशादिः ।।२।१।४३।।**

**'निगद' शब्दो योगेन उच्चैष्ट्वगुणवद्वाचको भवति, तदा ऋक्सामयोरपि वाचको भवतु इति आह –**

**सर्वेषामिति चेत् ।।२।१।४४।।**

**सर्वेषाम् ऋक्सामनिगदानां 'निगद' शब्दवाच्यत्वम् इति चेत् मन्यसे, इति पूर्वः पक्षः ।।२।१।४४।।**

---

सूत्रवैयर्थ्यम् अतः पक्षान्तरम् आहुः स्वाभाविकः इत्यादि, अयम् उच्चैष्ट्वधर्मो मन्त्राणां स्वाभाविकः. मन्त्रास्तु कर्मा'भूताः अतः तथा इति अर्थः ।।२।१।४२।।

**धर्मविशेषाद्** इत्यस्य उत्तरम् उक्त्वा भेदव्यपदेशस्य उत्तरं ददाति इति आहुः **निगदः** इत्यादि. अत्र आशङ्कते **ननु** इत्यादि, वचनप्रयोजनसंज्ञाभेदैः उच्चैष्ट्वगुणकथनं व्यर्थं, तदन्यतमेनैव उच्चैष्ट्वस्य प्राप्तेः. अतो वचनं प्रयोजनं च इति द्वयं गुणभेदकम् अस्तु ! 'निगद' इति व्यपदेशस्यतु न तादर्थ्यं, ताभ्यामेव तत्प्राप्तौ सत्याम् अस्य वैयर्थ्येन तत्र अपर्यवसानात्, शब्दतो अर्थतो विधानात् च; तत्र युक्त्यन्तरापेक्षायाः अभावात्. यदि गुणस्य नित्यत्वार्थं ''संज्ञापि गुणार्था'' इति उच्यते, तदा स उच्चैष्ट्वगुणः तत्र नित्यइति सर्ववैलक्षण्याद् गुणः स्वरूपभेदकएव अस्तु ! तथाच संज्ञायाः गुणार्थत्वादरणेपि न स्वरूपभेदबाधः इति अर्थः. अत्र समादधते **मा एवम्**



इत्यादि. **तदभावाद्** इति उच्चैष्ट्वस्य तत्र अभावेन तस्य नित्यत्वाभावात्. तत्र प्रकारम् आहुः यत्रापि इत्यादि ।।२।१।४३।।

भाष्यम् अत्र स्फुटम् ।।२।१।४४।।

**न व्यपदेशात्[१] ।।२।१।४५।।**

**न, अन्यत्र 'ऋक्साम' इति भिन्नएव व्यपदेशो अस्ति. तेन बलवता दुर्बलो बाध्यते इति अर्थः. अपादबद्धश्च निगदो अतो न पर्यायत्वम्, अयमेव च भेदकः. यजुषान्तु तदभावाद् गुणस्तु अन्यथासिद्धइति यजुर्विशेषएव निगदः ।।२।१।४५।।**

**।।इति द्वादशं निगदानां यजुष्ट्वाधिकरणम्।।**

**(त्रयोदशाधिकरणम्)**

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ।।२।१।४६।।**

**संश्लिष्टपाठाद् यजुषि सन्देहः – एको मन्त्रः कियान् ? इति. यद्यपि विनियोगब्राह्मणेन उत्तरादिना पूर्वावसानम् इति ज्ञायते, तथापि पूर्वोत्तरानुषङ्गयुक्तेषु ब्राह्मणे निर्णयाभावाद् निर्णयो वक्तव्यइति**

---

**तेन** इति रूढेन व्यपदेशेन. नच ''ऋच्यते इति सा च आम च'' इति योगस्य तत्रापि सत्त्वाद् अस्य तत्पर्यायत्वं शङ्क्यम्, **अपादबद्धः** आमवर्णरहितो **निगदो** अतो **न तत्पर्यायत्वम्. अयं** पादबन्धएव ऋक्-सामयोः यजुषः सकाशाद् **भेदकः.** अतः तथा इति अर्थः. अत्र एवं सूत्रकारस्य आग्रहे ''अहेबुध्निय'' (तै.ब्रा.१।१।१०।३) इति मन्त्रोक्तं त्रैविध्यमेव बीजं ज्ञातव्यम् ।।२।१।४५।।

।।इति द्वादशं निगदानां यजुष्ट्वाधिकरणम्।।

पूर्वैः चतुर्भिः अधिकरणैः मन्त्रत्रैविध्ये स्थिते यो विशेषो अकथितो अवशिष्यते तदर्थम् अधिकरणारम्भः इति आहुः **संश्लिष्ट...** इत्यादि. **ज्ञायते** इति मन्त्रेयत्ता ज्ञायते. **पूर्वोत्तरानुषङ्गयुक्तेषु** इति 'अनुषङ्गाङ्ग नाम ''एकवाक्यशेषतया संनिहितस्य पदादेः वाक्यान्तरशेषतया योजनं, पूर्वं वा

१. 'न ऋग्व्यपदेशाद्' इति प्रसिद्धः पाठः.

**तम् आह अर्थैकत्वाद् एकं वाक्यम् इति, एकार्थप्रतिपादकं एकं वाक्यं, अर्थश्च निराकाङ्क्षः. सच पदैः उत्थितएव. अन्यथा अपर्यवसानमेव स्याद्, उत्थापिताकाङ्क्षायाः सर्वत्र वक्तुं शक्यत्वात्. तत्र केचन अनुषङ्गाः क्रियारहिताः साकाङ्क्षाएव, तेषां संश्लिष्टपाठाद् आकाङ्क्षाभावेपि क्रियापर्यन्तम् एकतैव. यथा ''देवस्य त्वा'' (तै.सं.१।१।४।९) इति. पश्चात् क्रिया पूर्वपदैः सर्वैरेव तुल्येति न भेदिका. ''सजूर्ऋतुभिः'' (तै.सं.४।३।४।६-१०) इत्यादौ – वसवो रुद्राः आदित्याः विश्वेदेवाः देवताः च – इति पञ्च प्रधानभूताः अर्थरूपाइति पञ्च मन्त्राः. अतः क्रिया वा देवतादिः वा यएव प्राधान्यम् अवलम्बते, सएव 'अर्थ'शब्दवाच्यः. केचन मन्त्राः आदावेव अनुषङ्गयुक्ताः यथा ''आददे...'' (तै.सं.१।१।९।१)इत्यादि, ''संहितो विश्वसामा'' ( तै.सं.३।४।७।३-४) इत्यादयो अन्ते अनुषङ्गयुक्ताः; केचिद् उभयत्र ''सजूः...'' इत्यादयः. तस्माद् एकार्थप्रतिपादकम् एकं वाक्यम्.**

पश्चाद् वा''. तादृशपदान्तरादियुक्तेषु सूत्रस्य प्रथमं दलं व्याकुर्वन्ति एकार्थ... इत्यादि. तत्र ''अर्थोऽभिधेय-रै-वस्तु-प्रयोजन-निवृत्तिषु'' (अम.को.३।३।८६) इति कोशेन 'अर्थ'शब्दस्य पञ्चसु शक्तत्वेपि रै-वस्तु-निवृत्तीनाम् अत्र प्रसङ्गाभावात् प्रयोजनम् अभिधेयं वा अवशिष्यते. तयोः किम् इह विवक्षितम् इति आकाङ्क्षायाम् अभिधेयम् अत्र विवक्षितम् इति आशयेन आहुः **अर्थश्च** इत्यादि. **निराकाङ्क्ष** इति अधिकाकाङ्क्षारहितः. **उत्थितः** इति बोधितः. तथाच ''पदपूरिताकाङ्क्षातो अधिकाङ्क्षारहितं यद् एकम् अभिधेयं सो 'अर्थः''' इति तस्य मुख्यार्थस्य प्रतिपादको यावान् पदसमुदायः तद् एकं वाक्यम् इति अर्थः. एवं सूत्रांशं व्याख्याय अर्थस्य ऐक्यं वक्तुम् आहुः **तत्र** इत्यादि. **अनुषङ्गाः** इति अनुषङ्गयुक्ताः मन्त्राः. **आकाङ्क्षाभावेपि** इति आकाङ्क्षायाः सत्त्वेपि. उदाहरणन्तु ''देवस्य त्वा सवितुः



प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि'' (तै.सं.१।१।४।९) इति, अत्र निर्वापक्रिया प्रतिपाद्या, मुख्यतया, अतो अस्य पदसमुदायस्य क्रियापर्यन्तम् एकतैव पश्चात् सा क्रिया सर्वैः पदैः कारकभूतैः सम्बध्यतइति न भेदिका. भेदोदाहरणम् आहुः **सजूर्** इत्यादि. पाठस्तु – ''सजूर्ऋतुभिः

---

**ननु यत्र एकार्थता सन्दिग्धा तत्र का गतिः? यथा ''इषे त्वा...'' (तै.सं.१।१।१।१) इति, क्रियातु आर्थिकी ''इषे त्वोर्जे त्वेत्याह'' (तै.ब्रा.३।२।१।३) इति ब्राह्मणं च सन्दिग्धम्. अतः**

सजूर्विधाभिः सजूर्वसुभिः सजू रुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैः'' (तै.सं.४।३।४।६-१०) इति. एतेषु वसु-रुद्रा-दित्या-विश्वेदेवा-देवताश्च इति पञ्च प्रधानार्थभूताइति तत्प्रतिपादकत्वात् पञ्च मन्त्राः. पञ्चानां विनियोगः इष्टिकोपधाने कल्पसूत्राद् अवगम्यते. तत्र क्रिया न प्रधानं, तस्याः तथात्वे ऐकमन्त्र्यापत्तेः. अतो यएव प्राधान्यम् अवलम्बते सएव 'अर्थ'शब्दवाच्यः इति. एवं द्विविधोदाहरणम् उक्त्वा अनुषङ्गभेदोदाहरणम् आहुः केचन इत्यादि. 'आददे' (तै.सं.१।१।९।१)इति मन्त्रः स्फ्यादाने विनियुक्तः. तस्मिन् ''देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्'' (तै.सं.१।१।४।९) इत्यादिभागे अनुष'ः. ''संहित...''(तै.सं.३।४।७।३-४) इत्यादिषु ''राष्ट्रभृन्मन्त्रेषु'' (तै.सं.३।४।७।१-२२) अन्ते, ''सजूर्...'' (तै.सं.४।३।४।६-१०)इत्यादिषु ''सजूर्ऋतुभिः सजूर्विधाभिः'' (तै.सं.४।३।४।६) इति पूर्वभागे अनुषङ्गः. ''सजूर्देवैर्वयोनाधैः'' (तै.सं.४।३।४।१०) इत्यन्ते अनुषङ्गइति उभयत्र. तथाच अनुषङ्गयुक्तेषु ब्राह्मणादेः अनिर्णायत्वाद् अयम् एकवाक्यत्वज्ञानोपायः इति अर्थः. उत्तरदलम् अवतारयन्ति ननु इत्यादि. ननु यत्र अनुषङ्गो नास्ति मुख्यार्थस्य अस्पष्टत्वाद् एकार्थतापि सन्दिग्धा यथा ''इषे त्वा'' (तै.सं.१।१।१।१) इति मन्त्रे तत्र एकवाक्यत्वज्ञानस्य कः उपायः? नच क्रियाम् अध्याहृत्य तस्याः मुख्यत्वं कल्पयित्वा एकवाक्यत्वम् अर्थैक्यात् सम्पादनीयम् इति युक्तं, क्रियातु आर्थिकी या काचिद् आयातीति अनियतेति तस्याः प्राधान्यस्य अयुक्तत्वात्. नापि ब्राह्मणेन निश्चयः, ''इषे त्वोर्जे त्वेत्याह इषमेवोर्जं यजमाने दधाति'' (तै.ब्रा.३।२।१।३) इति सन्दिग्धम्. अतः सन्दिग्धत्वादेव कल्पसूत्रे आपस्तम्बेन प्रत्येक-समुदायभेदेन द्वेधा विनियोगः उक्तः – '''इषे त्वोर्जे त्वा' इति ताम्

आच्छिनत्ति. अपिवा 'इषे त्वा'इति आच्छिनत्ति 'ऊर्जे त्वा'इति संनमयत्यनुनुमार्ष्टि वा'' (आप.श्रौ.सू.१।१।१०-११) इति, संनामनम् ऋजूकरणं, अनुमार्जनम् आनुलोम्येन संलग्नधूल्याद्यपनयनम्. नच बोधायनेन समुदायपक्षएव

**सूत्रे प्रत्येकमपि विनियोगः उक्तः समुदायेनापि. नच ''उत्तरस्यादिना'' इति न्यायेन एकएव मन्त्रो अस्तु ! तथासति ''इषे त्वोपवीरसि'' (तै.सं.१।३।७।१-२)इत्यादौ ''ऊर्जे त्वा'' (तै.सं.१।१।१।१) इत्यपि आगच्छेत्. अतो नियामकम् आह साकाङ्क्षं चेद् विभागे स्याद् एकदेशकथने यत्र साकाङ्क्षता तत्रैव सम्पूर्णम् एकम्. अन्यथा द्वयं भिन्नं ''इषे त्वा'' इति एकम् ''ऊर्जे त्वा'' इति अपरम्. समुदायविनियोगे मन्त्रद्वयस्य उपयोगो बोद्धव्यः. तस्माद् यावता एकार्थप्रतिपादनं तद् एकं वाक्यम्।।२।१।४६।।**

**।।इति त्रयोदशमेकवाक्यत्वलक्षणाधिकरणम्।।**

---

गृहीतइति ऋषिद्वयैकमत्यस्य ब्राह्मणस्य च सामञ्जस्याद् ''उत्तरस्यादिना'' इति न्यायेन एकएव मन्त्रो अस्तु इति युक्तं, तथासति कल्पसूत्रे आपस्तम्बेन ''इषे त्वोपवीरसि'' (आप.श्रौ.सू.७।१२।१।५) इत्यत्र विनियोगान्तरं यद् उक्तं '''इषे त्वा'इति बर्हिषी आदत्ते 'उपवीरसि'इति प्लक्षशाखां...बर्हिभ्यां प्लक्षशाखया च...प्रत्यञ्चं पशुम् उपाकरोति'' (आप.श्रौ.सू.७।१२।१।५-७।प.४) इति. तत्र ''ऊर्जे त्वा'' इत्यपि आगच्छेत् मन्त्रस्य एकत्वाद् अतः तादृशे स्थले पूर्वोक्तरीत्या निर्णयाभावात् का गतिः ? इति आकाङ्क्षायां तत्रापि निर्णयार्थं नियामकम् आह इति अर्थः. व्याकुर्वन्ति एकादेश... इत्यादि, पूर्वस्य उत्तरस्य वा एकदेशस्य विभज्य कथने यत्र पूर्वस्य उत्तरसाकाङ्क्षता उत्तरस्य पूर्वसाकाङ्क्षता वा तत्र उभयं मिलित्वा एकं वाक्यं तदभावेतु उभयं भिन्नं प्रकृतेतु न साकाङ्क्षतेति ''इषे त्वा'' इति एकं ''ऊर्जे त्वा'' इति अपरम्-इति वाक्यद्वयमेव इति अर्थः. अधिकरणमालायान्तु- एकार्थप्रतिपादकत्वे सति विभागे साकाङ्क्षं वाक्यम् 'एकवाक्यम्'(द्र.:जै.न्या.मा.२।१।१४) इति उक्तम्. आद्यदलोक्तौ ''भगो वां विभजतु''-''पूषा वां विभजतु''(मा.श्रौ.सू.१।२।३।१७) इति मन्त्रद्वये अतिव्याप्तिः, उभयोः तात्पर्यविषयस्य द्रव्यविभागरूपस्य अर्थस्य एकत्वात्. द्वितीयामात्रोक्तौ ''स्योनं ते सदनं कृणोमि 'करोमि' इति (तै.ब्रा.३।७।५।२-३), घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः'' (मा.श्रौ.सू.१।२।६।१९)इति मन्त्रद्वये अतिव्याप्तिः. पूर्वमन्त्रे 'ते' इति पदेन



(चतुर्दशाधिकरणम्)

**''पृथिवी दीक्षा'' (तै.ब्रा.३।७।७।४)इत्यादिमन्त्रेषु सन्देहः. अत्र सर्वेषाम् एकएव विनियोगः, ''केशिनीदीक्षां जपति''(आप.श्रौ.सू.१०।१०।६) इति. किम् अयम् अनुवाकः सर्वोपि एको मन्त्रः उत अनेकः ? अनेकत्वेपि किं ''पृथिवी दीक्षा'' इत्येतावान् एकः अथवा ''तया त्वा दीक्षया दीक्षयामि'' (तै.ब्रा.३।७।७।५) इत्यन्तः ? किं तावत् प्राप्तम् ? ''पृथिवी दीक्षा'' इत्येतावानेव एको मन्त्रः, एकार्थप्रतिपादकत्वात् निराकाङ्क्षत्वात् च ''...दीक्षयामि'' इत्यन्तेतु ''तया त्वा'' इति अनुषङ्गो भवेत्. तथाच प्रतिमन्त्रं न आवर्तेत. आदौ, अन्ते, आद्यन्तयोः वा अनुषङ्गवचनात्. तस्मात् प्रतिवाक्यं**

---

''व्रीहीणां मेधः'' इति आकाङ्क्ष्यते द्वितीये च 'तस्मिन्' इत्यनेन 'सदनम्' आकाङ्क्ष्यतइति परस्पराकाङ्क्षायाः सत्त्वात्. वस्तुतस्तु न इदं लक्षणं किन्तु नियामकमात्रकथनम्. नच ''भगो वाम्'' इत्यादौ ऐकमन्त्र्यापत्तिः, वक्ष्यमाणायाः समतायाः भेदिकायाः सत्त्वात्. नापि ''स्योनं ते'' इत्यत्र तदापत्तिः, ''उत्तरस्यादिना'' इति न्यायेन विनियोगविधिनैव भेदसिद्धेः इति।।२।१।४६।।

।।इति त्रयोदशमेकवाक्यत्वलक्षणाधिकरणम्।।

''एकार्थप्रतिपादकं विभज्यमानपदसाकाङ्क्षं वा यावत् पदजातं तावद् 'एकं-वाक्यम्''' इति वाक्यपरिमाणज्ञानप्रकारः उक्तः. तेन ''देवस्य त्वा'' इत्यादेः प्रमाणं ज्ञातुं शक्यं, क्रियादेवतादि-रूपैकार्थ-प्रतिपादकस्य पदस्य सत्त्वात्. यत्र पुनः वाचनिकं विनियोगैक्यं परस्परनिराकाङ्क्षता च यथा '''पृथिवी...'' इति मन्त्रेषु तत्र परिमाणज्ञानार्थम् अधिकरणारम्भः इति आशयेन आहुः पृथिवी इत्यादि. सन्देहबीजम् आहुः अत्र इत्यादि. ''केशिनीदीक्षाम्'' इति ''देवेषु त्रयः केशिनः अग्निः वायुः आदित्यः च''(द्र.:तै.ब्रा.सा.भा.२।७।१७।१) इति शाखान्तरे सिद्धं तत्सम्बन्धित्वाद् एते मन्त्राः 'केशिनीदीक्षा' इति उच्यन्ते ताम् इति अर्थः. सन्देहाकारम् आहुः किम् इत्यादि. तथाच विनियोगैक्येन एकार्थप्रतिपादकत्वाद् एकस्य कस्यापि अजपे मन्त्रपूर्त्यभावेन साकाङ्क्षत्वात् च एकः उत तत्तद्देवताप्राधान्यप्रका

**मन्त्रः इति प्राप्ते, उच्यते – यावता समं रूपं भवति स एको मन्त्रः. चत्वारः**

**पदार्थाः सर्वत्र निरूप्यन्ते – ''[१]पृथिवी दीक्षा [२]तया अग्निः दीक्षया दीक्षितः, यया अग्निः दीक्षया दीक्षितः [३]तया [४]त्वा दीक्षया दीक्षयामि'' (तै.ब्रा.३।७।७।४–५) इति. एवम् उत्तरत्रापि, चतुर्णाम् अन्योन्यम् पदार्थभेदात् पर्यवसानेनैव निराकाङ्क्षत्वाच्च एकं वाक्यम्. तर्हि सर्वमेव एकम् अस्तु ''पृथिवी त्वा दीक्षमाणम्'' (तै.ब्रा.३।७।७।७) इत्यन्तं, तत्र आह –**

**समेषु वाक्यभेदः स्यात्।।२।१।४७।।**

**समेषु वाक्यभेदः स्यात्, चतुर्विधार्थप्रतिपादकत्वेन समत्वम्. तेच स्वरूपतो भिन्नाइति वाक्यभेदः स्यात्. अनुषङ्गवत् समतापि वाक्यभेदिका. तस्मात् [१]सन्दिग्धेषु अर्थैकत्वं [२]विभागे साकाङ्क्षत्वं [३]\समता च चेति हेतुत्रयम् उक्तम्।।२।१।४७।।**

**।।इति चतुर्दशं वाक्यभेदाधिकरणम्।।१४।।**

---

शाद् अनेकः? द्वितीयपक्षे सन्देहान्तरम् [१]*अनेकत्वे इत्यादि पूर्वपक्षम्* आहुः. ''दीक्षयामि''इत्यादि, ''दीक्षयामि'' इत्यन्तं वाक्यचतुष्टयं चेद् एको मन्त्रः स्यात्. तत् ''तया त्वा दीक्षया दीक्षयामि'' इति चतुर्थं वाक्यम् अनुषङ्गः स्यात्. तस्य अर्थबलेन सर्वत्र योजयितुं शक्यत्वात्. नच इष्टापत्तिः, तथाच प्रतिमन्त्रं न आवर्तेत. अयन्तु ''देवस्य त्वा''(तै.सं.१।१।४।९) इतिवत् न आदौ, ''स मावतु''(तै.सं.३।४।५।१) इतिवत् न अन्ते, ''सजूर्...'' इतिवत् न आद्यन्तयोः. अतो अयं न अनुषङ्गः किन्तु मन्त्रान्तरम्. तथाच प्रतिवाक्यम् एकैकपदार्थप्रतिपादनात् प्रतिवाक्यं मन्त्रः इति पूर्वपक्षे प्राप्ते इति अर्थः. अत्र समादधते उच्यते इत्यादि. उत्तरत्र इति ''अन्तरिक्षं दीक्षा... द्यौर्दीक्षा'' (तै.ब्रा.३।७।७।५) इत्यादिषु. अन्योन्यं पदार्थाभेदाद् इति अग्रिमवाक्यस्थैः 'तया'–'यया'–'तया'इति पदैः पृथिव्यादेरेव परामर्शेण पदार्थाभेदात्. अत्र आशङ्कते तर्हि इत्यादि. एकैव अस्तु, इति विनियोगैक्याद्

---

१. *...* चिह्नान्तरितो अंशः जूनागढीयः पाठः.

**(पञ्चदशाधिकरणम्)**



**अनुषङ्गेषु विचारः क्रियते, किं वाक्यन्तरं प्रधानं वा शेषा वा? यदापि शेषास्तदापि यत्र पठितास्तस्यैव शेषास्तत्प्रकरणस्थानां सर्वेषां वा? तत्र अनुषङ्गो वाक्यान्तरं प्रधानवाक्यवद् इति प्राप्ते उच्यते –**

**अनुषङ्गो वाक्यपरिसमाप्तिः[१] सर्वेषु तुल्ययोगित्वात्।।२।१।४८।।**

---

**अनुषङ्गो वाक्यपरिसमाप्तिः वाक्यस्य परिसमाप्तिः येन तदभावे अपरिसमाप्तमेव वाक्यम्. ''या ते अग्ने अयाशया'' (तै.सं.१।२।११।५) इति औपसदमन्त्राः शाखाभेदेन ''तनूर्वर्षिष्ठा'' (मै.सं.१।२।७) इत्याद्यनुषङ्गे ते आदौ वा पठ्यन्ते. यत्र पठ्यन्ते**

एकैव दीक्षा अस्तु. तत्र आह इति तत्र भेदकम् आह. **उक्तम्** इति वाक्यान्तावधारणार्थम् उक्तम्।।२।१।४७।।

।।इति चतुर्दशं वाक्यभेदाधिकरणम्।।१४।।

अनुषङ्गस्य उदाहरणं **या ते अग्ने...** इत्यादि. तेषां तैत्तिरीयपाठस्तु ''या ते अग्ने अयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा'' (तै.सं.१।२।११।५–७) इति. अत्र प्रथमे मन्त्रे ''तनूर्वर्षिष्ठा...'' इत्यादि अनुषज्यते. द्वितीये ''या ते अग्ने...'' इति पूर्वं ''तनूर्वर्षिष्ठा'' इत्यादिच पश्चाद् अनुषज्यते. तृतीयेतु ''या ते अग्ने...'' इति प्रागेव अनुषज्यते. शाखान्तरेतु ''या ते अग्ने अयाशया तनूर्वर्षिष्ठा गहनेष्ठा त्वेषं वचो अपावधीरुग्रं वचो अपावधी. स्वाहा. या ते अग्ने रजाशया या ते अग्ने हराशया'' (मै.सं.१।२।७) इति पाठः. तत्र पूर्वमन्त्रे सर्वेषां पदानां सत्त्वात् द्वितीयतृतीयमन्त्रौ उदाहरणम्.

---

१. ''अनुषङ्गो वाक्यसमाप्तिः...'' इति प्रसिद्धः पाठः.

**तस्यैव इति प्राप्ते उच्यते – सर्वेषु मन्त्रेषु अनुषङ्गो वाक्यपरिसमाप्तिः. तत्र हेतुः तुल्ययोगित्वात्, तुल्यएव योगः=सम्बन्धः=आकाङ्क्षा येषु. यत्र पठ्यन्ते तस्य यथा आकाङ्क्षां पूरयन्ति तथा सर्वेषाम् इति अविशेषः. अनुषङ्गोपि मन्त्रभेदे नियामकः. तस्माद् अनुषङ्गः सर्वेषाम्।।२।१।४८।।**

**।।इति पञ्चदशमनुषङ्गाधिकरणम्।।**

## (षोडशाधिकरणम्)

**''सं ते प्राणो वायुना गच्छतां – संयजत्रैरङ्गानि – सं यज्ञपति–**

अर्थस्तु – हे अग्ने या ते अयाशया ''अयसि=कृष्णायसे शेते इति 'अयाशया' '' अयसा निर्मिता इति अर्थः. सा तनूः वर्षिष्ठा अतिशयेन प्रवृद्धा गह्वरेष्ठा तीक्ष्णद्रव्ये लोहे अवस्थिता, तया तन्वा उग्रं वचः क्षुत्पिपासे उपपातकं त्वेषं वचो वीरहत्यादिमहापातकं च अपावधी हतवान् अस्मि इति. ''अशनयापिपासे ह वा उग्रं वचः एनश्च वैरहत्यं त्वेषं वचः'' (      ) इति च ब्राह्मणम्. तत्र पूर्वपक्षम् आहुः तत्र इत्यादि. तथाच ''तनूः...'' इत्यादिकं यत्र पठितं तत्र तदाकाङ्क्षापूरणेन चरितार्थत्वात् निराकाङ्क्षमिति न अग्रिमवाक्ययोः सम्बद्धुम् ईष्टइति प्रधानवाक्यवद् वाक्यान्तरमेव. यत् पुनः अग्रिमयोः साकाङ्क्षत्वं तद् लोकिकेन यथोचितेन वाक्येन पूरणीयम् इति प्राप्ते इति अर्थः. समाधिं व्याकुर्वन्ति **वाक्यस्य** इत्यादि. तथाच यद्यपि अनुषङ्गो निराकाङ्क्षः, तथापि अग्रिमवाक्यद्वयं साकाङ्क्षम्. तत्र लौकिकं यद्यपि अध्याहर्तुं शक्यते, तथापि तदपेक्षया वैदिकेन शेषपूरणं युक्तं, वेदोक्तत्वेन संनिहित्वादिति. तैत्तिरीयपाठस्यापि उदाहरणत्वाय आहुः **अनुषङ्गः** इत्यादि, **तस्यैव इति तस्यैव शेषः**. समाधिं व्याकुर्वन्ति **सर्वेषु** इत्यादि. तैत्तिरीयपाठे ''या ते अग्ने...'' इत्यस्य आवृत्त्यभावाद् ऐकमन्त्र्यमपि सम्भावयितुं शक्यते तथापि कल्पकारैः अनुषङ्गस्य आदृतत्वाद् मन्त्रभेदः इति आशयं बोधयितुम् अत्र इदम् अधिकरणम् उक्तम् इति आशयेन आहुः **अनुषङ्गोपि** इत्यादि. सर्वेषाम् इति शेषः इति अर्थः ।।२।१।४८।।

।।इति पञ्चदशमनुषङ्गाधिकरणम्।।

**राशिषा'' (तै.सं.१।३।८।१) इति मन्त्रत्रयं शिरसि अङ्गोच्चलयोः श्रोण्यां च क्रमेण आघारशेषणाञ्जने विनियुक्तम्. तत्र 'गच्छताम्' इति क्रियापेक्षा सर्वेषाम् अस्ति तथापि द्वितीये मन्त्रे यथाश्रुतम् अर्थोपयोगि न भवतीति 'गच्छताम्' इति वक्तव्यम्. तत् न शक्यं, ''न प्रकृतावूहो विद्यते'' (आप.श्रौ.सू.२४।३।४९) इति निषेधात्. अतो द्वितीयः तावानेव मन्त्रः. तृतीये सन्देहः 'गच्छताम्' इति अनुषज्यते न [वा!]? इति. किं तावत् प्राप्तम्? अनुषज्यते, आकाङ्क्षायाः विद्यमानत्वाद् ऊहाभावात् च इति प्राप्ते उच्यते –**



**व्यवायान्नानुषज्यते[1]।।२।१।४९।।**

**व्यवायाद् न अनुषज्यते, यत्र अनुषङ्गस्य मध्ये व्यवायो भवति तत्र तेन प्रतिबद्धो अग्रे न गच्छति. यथा ''अग्निः भूतानाम् अधिपतिः स मावतु'' (तै.सं.३।४।५।१) इत्यत्र 'स' इति लिङ्गवचने यत्र न सङ्गच्छतः तत्र मन्त्रपाठे पृथग् अस्ति अनुष': – ''तन्मावतु / ते मावन्तु'' इति. अतोपि ज्ञायते न इदं पदम् उत्तरत्र अनुषज्यते**

---

क्वचिद् आकाङ्क्षासद्भावेपि अनुषङ्गो न भवति इत्येतदर्थं सूत्रं प्रणयति इति बोधनाय विषयम् आदौ आहुः **सं ते** इत्यादि, अङ्गोच्चलयोः  इति ककुदि, ''[2]'अङ्गोच्चल' शब्देन ककुद् उच्यते'' (तै.सं.सा.भा.१।३।८।७-९) इति सायणीये व्याख्यानात्. **अर्थोपयोगि न भवति** इति 'अङ्गानि' इति बहुवचनात् तथा. **प्रतिबद्ध...** इति, पूर्वत्र असम्बन्धेन बुद्धिविपरिवृत्तिभ'त् प्रतिबद्धः. ननु एतद् अप्रयोजकं ''देवस्य त्वा'' (तै.सं.१।१।४।९) इति अनुषङ्गस्य ''भूयो व्यवायेपि आददे'' (      ) इत्यादिमन्त्रेषु दर्शनाद् इत्यतः आहुः यथा इत्यादि. इत्यत्र इति, अस्मिन् मन्त्रसङ्घे. अतोपि इति पृथग् अनुषङ्गलिङ्गादपि. तथाच न अप्रयोजकम् इति अर्थः. नच यदि एवं तदा अत्रैव ''सोम ओषधीनाम्'' (तै.सं.३।४।५।१२)इत्यादिमन्त्र–

---

१. ''व्यवायान्नानुषज्येत'' इति प्रसिद्धः पाठः.

२. 'उच्चल'शब्देन' इति सायणीयः पाठः.

**इति. तस्माद् यत्र न व्यवायो न वा युक्तावयवपाठः तत्र अनुषज्यते इति सिद्धम्।।२।१।४९।।**

**।।इति षोडशं व्यवेताननुषङ्गाधिकरणम्।।**

**।।इति श्रीजैमिनीयसूत्रभाष्ये श्रीवल्लभाचार्यविरचिते द्वितीयस्य अध्यायस्य प्रथमः पादः।।**

पञ्चके ''स मावतु'' इति अनुषङ्गो न स्याद् इति शङ्क्यम्, ''अस्मिन् ब्रह्मन् अस्मिन् क्षत्रे'' (तै.सं.३।४।५।१) इत्यादिरूपस्य अनुषङ्गयुक्तावयवपाठस्य अनुषङ्गबोधकस्य सत्त्वात्. 'आददे' इत्यादौतु कल्पे ''देवस्य त्वा''(तै.सं.१।१।४।९) इत्यादि शेषपूरणाद् वाचनिको अनुषङ्गइति अदोषः. सिद्धम् आहुः तस्माद् इत्यादि।।४९।।१६।।

।।इति षोडशं व्यवेताननुषङ्गाधिकरणम्।।

इति श्रीमदाचार्यचरणविरचित-जैमिनीयभाष्यभावार्थपादविवरणं

श्रीमद्वल्लभनन्दनचरण-दासानुदास-श्रीपीताम्बरतनुज-

श्रीयदुपतिविरचितं

सम्पूर्णम्



।।श्रीकृष्णाय नमः।।

।।श्रीमदाचार्यचरणकमलेभ्यो नमः।।

## ब्रह्मवादकी भूमिकाके रूपमें पत्रावलम्बन ग्रन्थके कथ्य और महत्त्व का अध्ययन

**नमो भगवते तस्मै कृष्णायाद्भुतकर्मणे।**
**रूपनामविभेदेन जगत् क्रीडति यो यतः।।**
**बहु स्यां प्रजायेयेति वीक्षा तस्य ह्यभूत् सती।**
**तदिच्छामात्रतः तस्माद् ब्रह्मभूतांशचेतनाः।।**
**सृष्ट्यादौ निर्गताः सर्वे निराकारास्तदिच्छया।**
**विस्फुलिङ्गा इवाग्नेस्तु सदंशेन जडाअपि।**
**आनन्दांशस्वरूपेण सर्वान्तर्यामिरूपिणः।।**
**सच्चिदानन्दरूपेषु पूर्वयोरन्यलीनता।**
**जडो जीवान्तरात्मेति व्यवहारस्त्रिधा मतः।।**

**(त.दी.नि.१।१,२७-३०)**

**[उन अद्भुतकर्मा भगवान् कृष्णको नमस्कार कि जो अनेकविध रूपों और नामों को धारण करके क्रीड़ा करते हैं, जो अनेकविध रूप-नामवाला जगत् बन कर क्रीड़ा करते हैं; तथा जो किसी भी तरहके रूप या नाम को स्वयं धारण करे बिना भी उन्हें प्रदर्शित कर सकते हैं. सृष्टिके आदिमें उस एकरस अखण्ड सच्चिदानन्द ब्रह्मके बहुभवनके सत्यसङ्कल्पवश केवल इच्छामात्रसे स्वयं उसके ही सदंशसे सभी जड़ द्रव्योंका, चिदंशसे सभी आकाररहित जीवात्माओंका तथा आनन्दांशसे सभी अन्तर्यामिओंका 'अग्निविस्फुलिङ्ग'न्यायेन व्युच्चरण होता है. इनमें सदंशके भीतर चिदानन्दांशको अप्रकट=अन्तर्लीन हुवा जानना चाहिये; और चिदंशमें आनन्दांशको. अतः जड़ जीव और अन्तरात्मा यों त्रिविध व्यवहार उपपन्न हो पाते हैं.].**

::ब्रह्मवाद::

नाम रूप और कर्म की यह त्रयी है...यह वाणी जो सारे नामोंका भरण करती है...यह चक्षु जो सारे रूपोंका भरण करती है...यह आत्मा जो सारे कर्मोंका भरण करती है. ये नाम-रूप-कर्म तीन होनेपर भी आत्मतया एक हैं. आत्मा एक होनपर भी नाम-रूप-कर्मतया तीन होती हैं. यह ऐसा एक अमृत है जो सत्यसे आछन्न है. प्राण ही तो स्वयं अमृत होता है और नाम-रूप ऐसे सत्य हैं कि जिनसे प्राण आछन्न रहता है.

बृहदारण्यकोपनिषद्के प्रथमाध्यायके उपसंहारके इस वचनमें नाम-रूप-कर्मोंके आधारतया प्राणात्माकी त्रिविधता तथा प्राणात्मामें वृत्तितया नाम-रूप-कर्मोंकी एकविधता द्योतित हुयी है. इसी तरह नाम-रूपकी आच्छादकता भी एवं सत्यता भी यहां कही गयी है. यह नामरूप और प्राणात्मा के बीच एक विलक्षण प्रकारके सम्बन्धकी स्वीकृति है.

इसे सूत्रात्मक मूलवचनके रूपमें स्वीकार कर भगवद्गीता तथा भागवत के यहां दिये जाते इन वचनोंको वृत्ति एवं भाष्य मान कर चलें तो चित्र कुछ और भी अधिक स्पष्ट हो पाता है:-

एक और पृथक् दोनों होनेके रूपमें - बहुविध विश्वरूप होनेके रूपमें, ज्ञानयाजी मेरी उपासना करते हैं. मैं ही क्रतु हूं, मैं यज्ञ हूं, स्वधा मैं हूं, औषध मैं हूं, मन्त्र मैं हूं, मैं ही घृत हूं, अग्नि मैं हूं और आहुति भी मैं ही हूं. मैं इस जगत्का पिता हूं, माता हूं, धाता हूं, पितामह हूं, वेद्य पवित्र ॐकार भी मैं हूं और ऋग्वेद सामवेद और यजुर्वेद भी मैं ही हूं. सभीकी सदसद् गति मैं हूं, सभीका भरण-पोषण करनेवाला, सभीका स्वामी और साक्षी भी मैं हूं, सभी मेरेमें बसते हैं, मैं सभीका आश्रय हूं, सभीका मित्र हूं. मैं इस जगत्की उत्पत्ति हूं, जगत्का प्रलय मेरेमें होता है, जगत् मुझमें अवस्थित है, सब कुछ मेरे भीतर भरा रहता है, इस जगत्का अविनाशी बीज मैं ही हूं. तपता मैं हूं, बरसता मैं हूं, मैं ही रोके रखता हूं और मैं ही छोड़ता हूं, मैं अमृत हूं और मृत्यु भी मैं ही हूं, सत् और असत् भी मैं ही हूं!(भ.गी.९।१५-१९).



चारों वेदोंकी विलक्षण भाषाओंके विस्तारमें अपार वाणी स्वयं ही कुछ नियमोंको घड़ती है और कुछको तोड़ती भी है. इस वेदवाणीके द्वारा किस कर्मका विधान हो रहा है, किस वस्तुका निरूपण हो रहा है; या किस विदित वस्तुमें विकल्प खड़े किये जा रहे हैं - इसे मेरे बिना और कौन जान सकता है! वेदवाणीके द्वारा साध्य कर्मका जो विधान किया जाता है, सिद्ध वस्तुका जो अभिधान किया जाता है; साध्य या सिद्ध वस्तुमें अनेक विकल्पोंको उपस्थापित करके किसी एक कल्पका अपोहन जो किया जाता है - वह सब कुछ मेरे ही बारेमें किया गया समझना चाहिये. शब्दोंके भेदसे सारे वेदोंका अर्थ तो मैं ही हूं; क्योंकि निषेध भी मेरी ही मायाके कारण प्रकट=अनुभूत होती वस्तुओंके बारेमें किया जाता है (भाग.११।२१।४०-४३).

धैर्यपूर्वक इन तीनों वचनोंके अवगाहनसे जो तथ्य प्रकट होता है वह यह कि रूप-रस-गन्ध-स्पर्श-शब्दादि गुणोंके आश्रयतया द्रव्यात्मना पञ्चविध प्रत्यक्षेण गृह्यमाण जागतिक पदार्थों [Percepts] को; अथवा नाम-आख्यात-उपसर्ग-निपातात्मना उच्चार्यमाण चतुर्विध पदोंसे निरूपित होते बौद्धिक पदार्थों या प्रत्ययों [Concepts] को भी, अब्रह्मात्मक या मिथ्या नहीं माना जा सकता है. यद्यपि आख्यात उपसर्ग या निपात रूपी तीनोंके न सही, कमसे कम अन्तिम दो तरहके पदोंके तो, किसी भी तरहके मूर्त प्रत्यय बुद्धिभास्य न भी होते हों परन्तु एतावता अमूर्त प्रत्ययोंका भी बौद्धिक भास न स्वीकारें तो इन पदोंको अर्थहीन ही स्वीकारना पड़ेगा. अतः बौद्धिक प्रत्यय भी मूर्त या अमूर्त दोनों ही प्रकारके स्वीकारने पड़ते हैं.

सकल जागतिक नाम-रूप-कर्म ब्रह्मात्मक हैं. न केवल इतना अपितु सद्-असद् और अमृत-मृत्यु जैसे विरुद्ध रूपोंको भी प्रकट या धारण करनेवाला एकमात्र ब्रह्म स्वयं एकत्व-पृथक्त्वाश्रय है ऐसा भी स्वीकारा गया है! हमारी वाणीद्वारा किये जाते अभिधानद्वारा जो सत् अभिहित होता

**है या जो असत् व्यावर्तित होता है; अथवा शास्त्रप्रशंसित अमृतत्व जिन विहित कर्म–ज्ञान–भक्तिरूप सत्साधनोंद्वारा उपलब्ध होता है या शास्त्रनिन्दित शोकमोह–जन्ममृत्युका चक्र जिन असत्कर्मों या दुष्कर्मों से प्राप्त होता है – ऐसे लौकिक या शास्त्रीय विधानाभिधानगत अनेकविध विकल्पोंमें उपादेय कल्पकी तरह अपोह्य कल्प भी वही एकमात्र ब्रह्म है !**

**ऐसी स्थितिमें एक प्रश्न स्वाभाविक रूपसे उठता है कि किसी भी अभिधान या विधान के द्वारा अपोह्य या व्यावर्तनीय असत्कल्प या मृत्युकल्प को भी ब्रह्मात्मक मान लेनेपर ब्रह्म या माया; अथवा ब्रह्मात्मक या मायिक के बीच भी भेद सिद्ध नहीं हो पायेगा ! फिर तो ब्रह्म भी मायिक और माया स्वयं ब्रह्मरूपा सिद्ध होगी !! सारेके सारे हेयोपादेयताके, बुद्धिगत एवं व्यवहारगत, निकष निरर्थक ही सिद्ध हो जायेंगे !!!**

> उसने चाहा – ''मैं एक अनेक बन जाऊं !''...यह सब उसने सिरजा. यह जो कुछ है उसे रच कर वही इसमें अनुप्रविष्ट हुवा है. इसमें अनुप्रविष्ट होकर वह सत् और त्यत् बन गया, निरुक्त और अनिरुक्त भी, साधार और निराधार भी, विज्ञान और अविज्ञान भी, सत्य और अनृत भी वही सत्य बन गया. यह जो कुछ है उसे 'सत्य' कहा जाता है (तै.उ.३।६).

**इस तैत्तिरीयोपनिषद्के वचनके आधारपर शुद्धाद्वैतवादकी यह सुदृढ़ धारणा है कि माया अज्ञानरूपा हो या अनृत हो, है तो वह भी ब्रह्मका ही एक विलक्षण रूप या सामर्थ्य ही.**

**''प्रापञ्चिक नाम–रूप–कर्मात्मना स्वयं ब्रह्म परिणत हुवा है'', ऐसी धारणाके बारेमें सांख्य मतद्वारा तार्किक आपत्ति उठायी गयी थी कि ब्रह्म सर्वात्मना परिणत होता हो तो कारणरूप ब्रह्मका नाश होगा और अंशात्मना परिणत होता हो तो उसके निरवयव स्वरूप होनेकी बात असंगत हो जायेगी !!**

**इसका समाधान वैसे तो श्रीशङ्कराचार्य भी स्वयंको 'ब्रह्मवादी' घोषित करते हुवे यों देना चाहते हैं –**

> आपत्तिकर्ताके मतमें भी यह दोष तो समानरूपेण उठ सकता है. क्योंकि प्रधानवादीके मतमें भी ''सावयव परिच्छिन्न शब्दादिमान् कार्यका निरवयव अपरिच्छिन्न शब्दादिविहीन प्रकृति कारण तो बनती है'' ऐसा तो स्वीकारा ही गया है. ...कार्योंकी विलक्षणताके आधारपर प्रकृतिमें ही ऐसी कुछ विलक्षण शक्तियां अवयवतया स्वीकार ली जाती हों तो, वैसी तो ब्रह्मवादी भी स्वीकार ही सकते हैं. ...यों समान धारणाओंके आधारपर कोई किसीको कुछ कह नहीं पायेगा ! अतः ब्रह्मवादी भी अपने पक्षपर लगाये गये दोषोंका समाधान तो दे ही सकता है(ब्र.सू.भा.२।१।२९).



**उल्लिखित शास्त्रवचनोंमें, परन्तु, कण्ठतः घोषित नाम–रूप–कर्मकी ब्रह्मात्मकताको या ब्रह्मकी नाम–रूप–कर्मात्मकताको स्वीकार करनेका जैसे ही प्रसंग उपस्थित होता है, श्रीशङ्कराचार्य शीघ्र ही स्पष्टता कर देते हैं :–**

> **यह जो अज्ञानकल्पित... नाम–रूप–कर्मात्मक जगत् है, वह अनात्मरूप है – आत्मा जो साक्षात् अपरोक्ष ब्रह्म होती है तद्रूप नहीं. इसलिये नामादिरूप जगत्से विरक्त होना चाहिये, ऐसी बात 'त्रयं वा' इत्यादि शब्दोंद्वारा कही जाती हैं. ...जिस घड़ेका रूप जिस मिट्टीसे गढ़ा गया हो, वह उससे अलग नहीं किया जा सकता है. ...इसी तरह इन यथोक्त नाम रूप और कर्म के ... एक होनेकी बात जिस तत्त्वके साथ कहनी है वह है यह कार्यकारणसंघातरूप देहपिण्ड... (बृ.उ.भा.१।६।१–३).**

**ब्रह्मके बजाय अविद्यारूपा मायाको उपस्थापित करनेवाली इस निरूपणशैलीको, महाप्रभु श्रीवल्लभाचार्य, ब्रह्मवाद न मान कर मायावाद ही मानते हैं. प्राकृत मायिक अथवा किसी भी तरहके अस्वीय गुणमूलक औपाधिक कर्तृत्वकी कल्पनाका ब्रह्मके बारेमें कोई भी औचित्य स्वीकारने महाप्रभु उद्यत नहीं हैं. अतएव औपाधिक कर्तृत्वका प्रत्याख्यान करते हुवे वे कहते हैं :–**

> **अपने सङ्कल्पद्वारा इस सृष्टिको प्रकट कर पानेके गुणवाले परमात्माको गौणकर्ता अर्थात् प्रकृतिके सत्त्व–रजस्–तमोगुणोंके सम्बन्धके कारण सृष्टिको प्रकट करनेवाला स्वीकारा नहीं जा सकता है. क्यों ? इसीलिये कि श्रुतिमें**

'आत्मा' शब्दका प्रयोग किया गया है. उपक्रममें –''आत्मा वा इदमेक एवाग्र आसीद्'' कह कर बादमें –''स ऐक्षत'' कहा गया है... इससे सिद्ध होता है कि श्रुति आत्माको ही सृष्टिका कारण मानती है. ''एक श्रुति कार्यकारणभावरहित और दूसरी कार्यकारणभावसहित ब्रह्मको निरूपित करती हो तो दोमेंसे एकको बाधितार्थ मानना पड़ेगा!'' ऐसी धारणा भी उचित नहीं है, क्योंकि गुणोंके आधीन होनेसे सृष्टि प्रकट करनेवालेको स्वतन्त्र कर्ता माना नहीं जा सकता. वेद ही प्रमाण है, अतः उसके ही आधारपर ब्रह्मके सर्वभवनसामर्थ्यको अङ्गीकार कर लेना चाहिये. इसके अलावा जड़–चेतन वस्तुओंके होने, अनुभूत होने; और प्रिय लगने जैसे धर्मोंकी तरह जीवानुस्यूत कर्तृत्व भी मूलतः ब्रह्मगत ही होता है, क्योंकि जगत् ब्रह्मका कार्य है. अतः 'आत्मा' शब्दके प्रयोगवशात् प्राकृत गुणोंसे अतीत परमात्माको ही इस सृष्टिका कर्ता मानना चाहिये(ब्र.सू.भा.१।१।५).

वैसे क्योंकि धर्म और ब्रह्म दोनों ही समानरूपेण सर्वथा शास्त्रीय प्रमेय ही हैं, अतः शास्त्रोंके सच्चे अभिप्रायके अनुरोधवश ही इनकी मीमांसा सम्भव है अन्यथा नहीं. इस विषयमें श्रीशङ्कराचार्यके ये उद्गार निरतिशय महत्त्व रखते हैं –''लौकिक वस्तुओंकी तरह इस ब्रह्मके बारेमें सोचा नहीं जा सकता, क्योंकि यह कोई अनुमानगम्य तत्त्व तो है नहीं. यह तो शब्दगम्य प्रमेय है, अतः शब्दोंके अनुसार ही यहां तो जो कुछ सम्भव हो उसे सोचा–स्वीकारा जा सकता है'' (ब्र.सू.भा. १।४।२७).

इसी यथाशब्दता –''अहं क्रतुरहं यज्ञो''–''मां विधत्तेऽभिधत्ते मां''– के आग्रहवश ही महाप्रभु स्वातन्त्र्येण अब्रह्मात्मक धर्मको या क्रियाशक्तिविहीन ब्रह्मको जिज्ञास्य नहीं मानते हैं; अपितु वेदके पूर्वोत्तरकाण्डोंमें प्रतिपाद्यविषयको इतरेतरात्मक ही स्वीकारते हैं –''यज्ञरूपो हरिः पूर्वकाण्डे, ब्रह्मतनुः परे, अवतारी हरिः कृष्णः श्रीभागवत ईर्यते''(त.दी.नि.१।११).

महाप्रभुको अभिप्रेत 'ब्रह्मवाद'का अर्थ, वे स्वयं, इन शब्दोंमें प्रकट करते हैं:–



वही है जगत्का समवायी कारण भी और निमित्त कारण भी. कभी वह आत्मना क्रीड़ा करता है तो कभी प्रपञ्चात्मना भी. जहां जिसकेद्वारा जिससे जिसका जिसकेलिये जिसे जो–कुछ जैसे और जब होता है, प्रकृति पुरुष या ईश्वर सभी कुछ साक्षात् भगवान् ही होते हैं(त.दी.नि.१।६८–६९).

परमात्मा ही यह सब कुछ बना है सृष्टि भी सृष्टिकर्ता भी. वही विश्वात्मा पालनकर्ता और पालित बना है. वही ईश्वर प्रलयकर्ता बन कर प्रलीन हो जाता है. ''आत्मा ही यह सब कुछ है – ब्रह्म ही यह सब कुछ है'' इन श्रौत अर्थोंके अनुसार स्वमत कहना ब्रह्मवाद है. अन्यथा सारी बातें मोहार्थ कल्पित हैं(त.दी.नि.२।१८३–८४).

इस ब्रह्मवादकी अनुभूति, अधिकारिभेदवशात्, पुनः दो तरहकी निरूपित की गयी हैं: १.सखण्डब्रह्माद्वैतकी अनुभूति २.अखण्डब्रह्माद्वैतकी अनुभूति.

''ब्रह्मवादमें भी 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' श्रुतिवचनके अनुरोधवश विकल्पोंको असत्यतया अङ्गीकार करना चाहिये'' ऐसी आशङ्काके समाधानार्थ अखण्डाद्वैतभानका स्वरूप समझना आवश्यक है. वेदान्तमें सखण्ड और अखण्ड अद्वैतके रूपोंमें ब्रह्मोपदेशके दो प्रकार दिखलायी देते हैं.

सखण्डब्रह्माद्वैतकी अनुभूति: ''बहु स्यां प्रजायेय'' जैसे श्रुतिवचनोंके आधारपर उच्च–नीचभावोंमें भगवान् ही अपने–आपको प्रकट करते हैं; अतः ब्रह्मज्ञान होनेपर भी विकल्पोंका अवगाहन करनेवाली बुद्धि और ब्रह्मावगति के बीच कोई विरोधाभास नहीं उठ पाता.

अखण्डब्रह्माद्वैतकी अनुभूति: ''वाचारम्भणं...'' जैसे श्रुतिवचनोंमें '' 'विकार'=कार्य तो कहने भरकी बात होती है'' ऐसे विधानद्वारा कार्यांशपर भार दिये बिना, केवल ब्रह्मके स्वरूपपर भार देनेको, ब्रह्ममें आविर्भूत / तिरोभूत नाम–

रूप–कर्मोंसे ब्रह्मको पृथक् करके जब उपदेश दिया जाता है, तब जगत्को 'सन्मात्र' कहा जाता है...जैसे स्वर्णके किसी ग्राहकको सारे स्वर्णाभूषणोंमें स्वर्ण ही दिखलायी देता है, वैसे ही किसी ब्रह्मज्ञानीको जब ब्रह्मके अखण्डाद्वैतका भान होता है, तब ब्रह्मत्वेन ही सारा जगत् अनुभूत होता है. इस अवस्थामें 'घट'–'पट'के जो अवान्तर विकल्प होते हैं, उनकी अनुभूति नहीं हो पाती – अतः विकल्पमात्रकी अवगाहिनी बुद्धि बाधित होती है: सर्वत्र ब्रह्म ही है और कुछ नहीं. एतावता घटादि पदार्थ स्वरूपतः बाधित नहीं हो जाते(त.दी.नि. १।९१).

अधिकारिभेदवशात् सखण्ड ब्रह्माद्वैतकी अनुभूतिके भी पुनः तीन प्रकारोंका निरूपण महाप्रभु करते हैं:–

''इदं हि विश्वं भगवान्'' वचनद्वारा विश्वके बारेमें उसके भगवान् होनेका विधान किया गया है. अतः ऐसी अनुभूति होनेपर सर्वत्र भगवद्दृष्टि सिद्ध हो जानेसे जीव कृतार्थ हो जाता है. अतएव ''सर्वं खलु इदं ब्रह्म तज्जलान्'' इस श्रुतिमें भगवान्के रूपमें कार्यका निरूपण अभिप्रेत है.

उत्तम मध्यम तथा अधम अधिकारिओंके भेदवश जगत्का निरूपण तीन तरहसे करना चाहिये. उत्तम अधिकारीकी बात तो ऊपर कह दी.

अब मध्यम अधिकारीकी अनुभूतिका निरूपण करते हैं – ''इदं विश्वं भगवान् इव'' अर्थात् यह जगत् स्वयं भगवान् न होनेपर भी भगवान्के ही जैसा सद्रूप एवं चिद्रूप है. अतः आदर आदिके मनोभाव भगवान्की तरह रखनेपर भी जगत्में आसक्ति नहीं करनी चाहिये.

जो निकृष्ट कक्षाके अधिकारी होते हैं, उन्हें यह जगत् भगवान्से विसदृश ही अनुभूत होता है: ''इदं विश्वं भगवान् इतरः'' = परमार्थ सत् भगवान्से यह जगत् इतर [अपारमार्थिक मिथ्या उत्पत्ति–नाशवान होनेसे भिन्न] है(सुबो.१।५।२०).

इससे सिद्ध होता है कि अखण्ड ब्रह्मानुभूतिका द्योतन – ''ब्रह्म ब्रह्म



है'' अर्थात् वाक्यके घटक उद्देश्य और विधेय रूप दोनों ही कोटिओंमें एक ही पदके विन्यासद्वारा यथाकथञ्चिद् व्यक्त किया जा सकता है. सखण्ड ब्रह्मानुभूतिके निरूपक वाक्यकी घटक उद्देश्य या विधेय कोटिओंमेंसे एक किसी कोटिमें 'ब्रह्म' पद होना आवश्यक है. अतएव महाप्रभु कहते हैं: ''यह प्रपञ्च न तो प्रकृतिका परिणाम है, न परमाणुओंसे आरब्ध, न मायाका विवर्त, न अदृष्टादि कारणोंवश प्रकट और न असत्मेंसे प्रकट हुवा सत्; किन्तु स्वयं भगवान्की कृतिसे प्रकट हुवा प्रपञ्च भगवद्रूप ही है''(त.दी.नि.१।२३). ब्रह्मानुभूतिनिरूपक वाक्यकी किसी भी एक कोटिमें यदि ब्रह्मनिरूपण न होता हो तो; अर्थात् ब्रह्मके बजाय सच्चिदात्मकतया ब्रह्मसदृश या अपारमार्थिकतया ब्रह्मविसदृश जैसा कुछ निरूपित होता हो तो, वैसी ब्रह्मानुभूति उत्तमकक्षाकी नहीं मानी जाती.

इस तरहकी उभयविध ब्रह्मानुभूतिको स्वीकारनेके कारण जो विरोधाभास प्रकट होता है उसके उपशमनार्थ महाप्रभुके ये वचन अतीव मननीय हैं:–

प्रत्यक्षसे दृष्टिगोचर न होनेवाले पदार्थोंके बारेमें श्रुतिनिरूपणमें यदि परस्पर विरोधाभास भी कहीं प्रतीत हो तो दोमेंसे किसी भी एक वचनको गौण नहीं मान लेना चाहिये. क्योंकि जब दोनों तथ्य वेदनिरूपित हों तो किस एक तथ्यका पक्ष लेकर किस दूसरे तथ्यको उपेक्ष्य मानना! श्रौत तथ्यका विचार तो सदा श्रुतिके ही आधारपर करना पड़ेगा. कर्मानुष्ठान या ज्ञानानुष्ठान की मीमांसामें, दोषतया माने जाते भी विकल्पके शास्त्रोपदिष्ट होनेपर, उभयविध कर्तव्योंके बोधार्थ प्रवृत्त परस्परविरुद्ध श्रुतिवचनोंमें एकवाक्यता यथाकथञ्चित् साधनी ही पड़ती है. ऐसे ही परस्पर विरुद्ध वर्णन मिलनेपर भगवद्रूपकी भी उभयविधता स्वीकार करके विरोधका उपशमन करना चाहिये. अतएव ब्रह्मको सर्वरूपसमर्थ स्वीकार कर विरुद्धधर्माश्रय मान लेना उचित होगा. इस बारेमें जो कुछ उच्चनीचादिके भेदवशात् अन्यथा प्रतिभान होता हो, वह भान, उसके कर्ता हरि ही स्वयं वैसे हैं; और ऐसा सोचनेपर जो कुछ तार्किक दूषण या

दोषपूर्ण प्रतीति स्फुरित होती हों वे भी स्वयं हरिरूप ही हैं. सारे विरुद्धपक्ष, क्योंकि, हरिमें ही शोभा पाते हैं!(सुबो.२।९।३२).

इस सन्दर्भमें पूर्वोक्त नाम–रूप–कर्मत्रयीकी ब्रह्मवादानुसारी मीमांसा करनेको उद्यत होनेपर ''सत्यं ज्ञानमनन्तं ब्रह्म'' श्रुतिवचनके अनुसार ''सत्+चित्+आन्नत्य[/आनन्द] = सच्चिदानन्द ब्रह्म''का एक श्रौत समीकरण सर्वप्रथम बुद्धिगत करना आवश्यक है. यहां 'आन्नत्य' पदद्वारा देशकृत कालकृत तथा स्वरूपकृत परिच्छेदरहित होना अभिप्रेत है. त्रिविध परिच्छेदोंसे रहित वस्तुका, अपरिच्छिन्नताके स्वभाववश ही, न केवल सर्वरूप होना अपितु विरुद्धधर्माश्रय होना भी अपरिहार्य हो जाता है. अतएव भागवतमें क्रिया–कारकोंके भेदवाले शब्दोंसे अनिरूप्य तथा अकरण होनेपरभी अखिलकारकोंकी शक्तियोंको धारण करनेवाले रूपमें विरुद्धधर्माश्रयी ब्रह्मको निरूपित किया गया है: ''शब्दो न यत्र पुरुकारकवान् क्रियार्थो''(भाग.२।७।४७) – ''त्वमकरणः स्वराड् अखिलकारकशक्तिधरः''(भाग.१०।८७।२८).

इनमें प्रथमवचन अखण्ड ब्रह्माद्वैतकी अनुभूतिका निरूपक है तथा द्वितीयवचन सखण्ड ब्रह्माद्वैतकी अनुभूतिका.

::ब्रह्मवादानुसारिणी सृष्टिप्रक्रिया::

इसी द्विविध ब्रह्मवादके अनुसन्धानमें प्रस्तुत पत्रावलम्बनकी तीसरी करिकामें कहा गया है:–

ब्रह्मवादे निरुक्तिस्तु न वक्तव्यैव कुत्रचिद्।
वस्तुतो ब्रह्म सर्वं हि व्यवहारस्तु लोकतः।।
(पत्रा.३).

भावार्थ: ब्रह्मवादके अनुसार तो कोई निरूक्ति दी ही नहीं जा सकती क्योंकि वस्तुतः सब कुछ बह्म ही है और निरुक्त्यादि शब्दव्यवहार तो लौकिक होते हैं.

अतएव सर्वथा अचिन्त्य अवाच्य एवं अव्यवहार्य भी ब्रह्म अपने सर्वभवनसामर्थ्य एवं सत्यसङ्कल्पसामर्थ्य के कारण सृष्टिको प्रकट करके



कथञ्चित् चिन्त्य वाच्य तथा व्यवहार्य भी बन जाता है. महाप्रभुके मतके अनुसार इसकी प्रक्रियाका निरूपण अब हमें देखना है.

''बहु स्यां प्रजायेय'' श्रुतिमें निरूपित सर्वभवनसमर्थ सच्चिदानन्द ब्रह्मकी स्वयं यह इच्छा भी ब्रह्मरूपा ही है. अखण्डैकरस सच्चिदानन्द ब्रह्ममें बहुभवनके सत्यसङ्कल्पवशात्, सर्वप्रथम आन्तरिक धर्मविभाजन होता है: सत्ता चैतन्य तथा अपरिमित आनन्दात्मक ऐश्वर्य वीर्य यश श्री ज्ञान और वैराग्य रूप अनेकविध धर्म अन्तःपृथक् होते हैं. इन सत्ता चैतन्य और आनन्द रूप धर्मोंमें, पूर्व–पूर्व स्वरूप और प्रत्यय का उत्तरोत्तर स्वरूप और प्रत्ययमें अन्तर्भाव; तथा उत्तरोत्तर स्वरूप और प्रत्यय का पूर्व–पूर्व स्वरूप और प्रत्यय में तिरोभाव स्वीकारा गया है. अतः ऐश्वर्यादिमें चैतन्य और सत्ता अन्तर्भूत हैं ही; परन्तु चैतन्य और सत्ता के हर उदाहरणमें ऐश्वर्यादि गुणधर्म प्रकट नहीं हो पाते हैं. इसी तरह चैतन्यमें सत्ता अन्तर्भूत है ही; परन्तु सत्ताके प्रत्येक उदाहरणमें चैतन्य प्रकट नहीं हो पाता है. इसी कारणसे सदंशमें रही क्रियारूपा शक्ति भी पृथग्भावापन्ना हो जाती है. चिदंशमें भी व्यामोहिका मायारूपा शक्ति पृथग्भावापन्ना हो जाती है. इसी तरह आनन्दांशमें भी जगत्प्राकट्यकारिणी विलक्षणशक्ति पृथग्भावापन्ना हो जाती है. एतत्त्रितयरूपा शक्तिका अभिधान 'सच्चिदानन्द' पदके साथ भाववाचक 'त्व–ता' प्रत्यय जोड़नेपर सिद्ध होता है. अतः 'सच्चिदानन्द=परब्रह्म' और 'सच्चिदानन्दता=अक्षरब्रह्म' इस सन्दर्भमें निरतिशय अवधेय समीकरण हैं. अतएव ''तद्धाम परमं मम''(भ.गी.८।२१) तथा ''स भगवः कस्मिन् प्रतिष्ठितइति स्वे महिम्नि यदि वा न महिम्नि''(छान्दो.उ.७।२६।२४) वचनोंमें 'धामन्' पदके – '' 'धाम'= शक्तौ प्रभावे च तेजो–मन्दिर–जन्मसु''(विश्व.९६।१२१) के अनुसार जो अनेक अर्थ स्वीकारे गये हैं, प्रायः उन सभी अर्थोंमें अक्षरब्रह्म तथा परब्रह्म के परस्पर सम्बन्धोंके निरूपकतया इस 'धाम' पदकी अन्वर्थता समझी जा सकती है. सङ्क्षेपमें अक्षरब्रह्मको धर्म या शक्ति की दृष्टिसे देखनेपर वह परब्रह्ममें स्थित रहता है तथा धामदृष्ट्या देखनेपर परब्रह्म अक्षरब्रह्ममें स्थित रहता है. यह स्वरूपनिरूपणकी प्रक्रिया है. इसे कार्य–कारणभावनिरूपणके उदाहरणके आधारपर समझना हो तो – एक निष्पन्न वस्त्रको अवयवीके रूपमें देखनेपर तदोत–प्रोत तन्तु अवयवतया उस वस्त्रमें अवस्थित प्रतीत होते हैं; अतः वस्त्र धर्मी तथा तन्तु धर्म के रूपमें अवभासित होंगे. इसी तरह तन्तुओंका ताना–

